## मनोवलविज्ञानविमर्शः ।

वर्णनमिदमार्याणां सदाचारपोषकमनाचाररोधकमवगन्तव्यम् । आर्य-सभ्यतायाः किञ्चिदुदाहरणमपीदम् । डाकिनीनां समुत्पत्त्या सह वृत्तिराज्य-सम्बन्धोऽपि सूक्ष्मविज्ञानमूलकः । मनोबलं द्वारीकृत्य सुकौशलपूर्णं यत्नमनुष्ठायैको मानवोऽपरं मानवं संकटशतसंकुलं विधातुं मारयितुं वा समर्थः । येन किल मनोबलेन आदिसृष्टिसमये बहुविधः सर्गः समुत्पन्नः, तेन च डाकिन्यः स्त्रियो बालकान् दुर्बलान्तःकरणान् यूनो वृद्धानपि मानवान् व्यापाद-यितुं शक्नुवन्तीति विषयेऽत्र कः सन्देहः ? अतो मनोबलेन सृष्टेरुत्पत्तिप्रलयौ द्वावपि सम्भवतः । डाकिनीसम्बन्धिनी शङ्काऽपि समाधीयते । तथा हि-असभ्या-वस्थायां मानवा मनुष्यहत्यात्मकं कुत्सितं कर्म सुकौशल क्रियया मन्त्रा-दिद्वारा कर्त्तुं शक्नुवन्ति, एतादृशी मन्त्राणां शक्तिः सम्भवति ।

आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा ।
षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः ॥

इत्यादि नीतिशास्त्रप्रमाणानुसारं पुरुषाणामपेक्षया स्त्रीणां धारणा अत्यधिका प्रबला चेति निश्चीयते । अस्मादेव कारणात् उन्नताः सत्यः स्त्रियः स्वकीयपत्युर्मृतशरीरेण सार्धं चितायां भस्मीभवन्ति नाणुमपि क्लेशमनुभवन्ति । इमामेव धारणाशक्तिं ताः कुत्सितेऽपि कर्मणि व्यापारयितुं शक्नुवन्ति । अत एव प्राय आधिक्येन स्त्रिय एव डाकिन्यो जायन्ते न पुमान्स इति॥ मनोबलस्यैता-दृशो दुरुपयोगः शिक्षया सह सभ्यताप्रादुर्भावतः समाजाद् दूरीभवितुमर्हति, किन्तु तदत्यन्ताभावस्तु प्रायोऽसम्भव एव। चाण्डालयोनिवर्णनतात्पर्यमिद-मेव यत् असभ्या निम्नश्रेणीगा मानवजातयो न केवलम् आचारहीना अपवित्रा एव वा भवन्ति, किन्तु प्राणिमात्रमेव क्लेशयन्ति । एतादृशनिकृष्टमनुष्यजा-तेरभावस्य भारते वर्षे संसारस्यान्यत्र देशे वा नैव सम्भावना । तादृश-सृष्टिप्रकरणवर्णनस्येदमेव तात्पर्यमवगम्यते यत् मानवसमाजेन सदा-चारोऽवलम्बनीयः कदाचारः परित्याज्यः, दैवेषु जगत्सु विश्वासो विधेयः, देवानाम् असुराणां च परस्परविरोधिनीं शक्तिं स्वीकृत्य दैवशक्तेराश्र-यणेन आसुरीशक्तिः सदैव स्वीयसूक्ष्मशरीरात् बहिष्कर्त्तव्या, निरन्तरमे-वाध्यात्मिकं लक्ष्यं रक्षणीयम्, वर्णाश्रममर्यादास्वीकारपूर्वकमात्माऽयमभ्युदय-मार्गे च प्रवर्त्तयितव्य इति ॥ ९५-१२१ ॥

## द्विपञ्चाशत्तमे अध्याये द्विविधसृष्टिप्रकाररहस्योद्घाटनम् ।

दैवी सृष्टिः साधारणतया द्विविधा भवति-तमोबहुला सत्त्वबहुला चेति ।

तमोबहुला तु पूर्वमेव प्रदर्शिता। अध्यायेऽत्र सत्त्वबहुला सृष्टि निरूपिता। अत एवाऽत्र सर्वतः समुन्नतानां देवर्षिपितॄणां सर्गरहस्यदिग्दर्शनमत्राध्याये दृश्यते। देवा ऋषयः पितरश्चैते सर्वे किल देवयोनयः। भगवतो रुद्रस्य समुत्पत्ति वर्णनं हि निरतिशयगम्भीरविज्ञानमूलकमवगन्तव्यम्। सृष्टेरादिमावस्थायां त्रिमूर्त्तेः ( ब्रह्मणः, विष्णोः, रुद्रस्य च ) आविर्भावो ब्रह्माण्डे एकस्मिन् समकालमेव संजायते। तदानीञ्च काले ( सृष्टिकाले ) ब्रह्मा जागर्त्ति, विष्णुर्योगनिद्रामाश्रितस्तिष्ठति, रुद्रस्तु तयोरुभयोरेव शरीरमध्ये व्याप्तो निलीनस्तिष्ठति। ब्रह्मणः साहाय्यमनुष्ठातु भगवतो विष्णो योंगनिद्राभङ्गस्तु पुराणेऽत्रैव प्रतिपादित एव। तदनन्तरञ्च रुद्रस्य प्राकट्यं भवति। त्रयाणामप्यमीषामाविर्भावः समकालञ्चापि सम्भवति। एषु न कश्चिदपि कस्यचित् पुत्रः। स्वाधिकारानुसारं त्रयोऽप्येते सगुणब्रह्मपदवाच्याः सन्ति। सर्वमिदं सविस्तरं पूर्वमुट्टङ्कितम्। त्रिष्वप्येतेषु ब्रह्मण आयुः सर्वतो न्यूनम्, विष्णोस्ततोऽधिकम्, ततश्चाप्यधिकं रुद्रस्येति सर्वेषामप्यमीषामायुर्वर्षसंख्याप्रदर्शनपूर्वकमग्रे वक्ष्यामः। दैव्यां सृष्टौ देवर्षिपितृसङ्घानाम् अधिपतयः क्रमेण विष्णु-रुद्र-ब्रह्माणोऽवगम्यन्ते। अत एव हि विष्णु धर्मप्रदाता, शिवो ज्ञानप्रदाता, ब्रह्मा च आधिभौतिकशक्तिप्रदाता चेति सिद्धान्तितम्। केवलं हि सृष्टिपरिचालनमेव कार्यं ब्रह्मणः। भगवतो विष्णोः शिवस्य च कार्यं पश्चात् प्रचलति अतएव क्वचिदेव ब्रह्मा लोके पूजितो भवति। भगवतो विष्णोः शिवस्य च समर्चनं सर्वत्रैव परिदृश्यते। ब्रह्मणोऽवतारस्तु पितैव परिज्ञायते। सर्वत्रैव विष्णोरेवावतार आधिक्येन श्रूयते। रुद्रस्य तु अवतारो ज्ञानविकासार्थं क्वाचित्कः समुपलभ्यते। इति ॥ १-३२ ॥

## चतुःपञ्चाशत्तमे अध्याये भूगोलवर्णनरहस्यविमर्शः।

यथा किल पुराणेषु दैवी, आसुरी, मानुषी च सृष्टिः सहैव समुपवर्णितोपलभ्यते, तथैव तत्र भौगोलिकानां देश-नदी-पर्वत-समुद्रादीनां मिश्रवर्णनमुपलभ्यते। त्रिकालदर्शिनो महर्षयस्तु चतुर्दशापि भुवनानि करामलकवत् पश्यन्तिस्म। अतः पुराणप्रतिपादितभूगोलवृत्तान्तेन सह लौकिकभूगोलसम्बन्धस्य मेलनं नितान्तमनुचितम्। य एवमनुतिष्ठन्ति, ते पुराणशास्त्रमपमानयन्ति। अस्योदाहरणं द्रष्टव्यम्। पुराणेषु सप्तसमुद्रवर्णनमुपलभ्यते। तेषु किल केवल लवणसमुद्र एव लौकिकः अन्ये षट् समुद्रास्तु दैवराज्यान्तर्गता अतिसूक्ष्मा एवेति ॥ १-१२ ॥

## षट्पञ्चाशत्तमे अध्याये भागीरथ्या विस्तृतिवर्णनम् ।

त्रिलोकपावन्या भगवत्या गङ्गादेव्या विस्तृते वर्णनमिदमतीव विचित्रम् । एतत्पाठकाः श्रद्धालवो विद्वांसोऽवगमिष्यन्ति यत् गङ्गादेव्या उभयोरेव स्वर्ग-मृत्युलोकयो र्या विस्तृतिः समुपलभ्यते, तस्या अत्र सहैव वर्णनमिदम् । भगवती भागीरथी देवी त्रिलोकपावनीति हेतो स्त्रिष्वपि लोकेषु तस्याः स्थितिर्वर्त्तते ॥ १—१२ ॥

## सप्तपञ्चाशत्तमे अध्याये भारतस्य कर्मभूमित्ववर्णनम् ।

भारतवर्षमिदं कर्मभूमिः, भारतव्यतिरेकेणान्ये सर्वे देशा लोका वा भोग-प्रधाना एवेति वचो रहस्यपूर्णमपि सर्वेष्वपि पुराणेषु परिदृश्यते । ननु सकला अपि लोकाः कर्माधीनास्तदा भारतवर्षस्यैव केवलस्य कथमेतादृशं प्राधान्य-मुदाहृतमिति शङ्कां समाधत्ते । तथा हि, स्वर्गीया विविधाः प्रदेशा वा भवेयुः, असुरलोकस्था बहुविधा वा देशाः स्युः, भूर्लोकस्य प्रेतादिलोका वा वर्त्तेरन्, मृत्युलोकेऽपि भारतव्यतिरिक्ता अन्ये वा प्रदेशाः कथं न स्युः ; सर्वे एवैते भोग-प्रधाना एव, एषु कर्मानुष्ठानस्वाधीनता तु नितरां न्यूना । दैवलोकेषु आसुरेषु वा लोकेषु भोग्याः पदार्था इच्छामात्रेणैव समुपतिष्ठन्ते, नरकप्रेतादिलोकेष्वपि तन्निवासिभिः सततं दुःखदायिन एव भोगा उपभुज्यन्ते इति सर्वेभोगलोका एव इत्यत्र नाणीयस्यपि सन्देहसम्भावना । मृत्युलोकेऽप्यत्र भारतव्यतिरिक्तप्रदेशेषु साधारणस्य मानवधर्मस्य द्विसप्ततिभेदभिन्नानामङ्गानां समनुष्ठानस्य नास्त्येव समुचितोऽवसरः, भारते वर्षे एव साङ्गोपाङ्गधर्मपालनं सम्भवति, भारतभूमौ किल वर्णाश्रमधर्मावलम्बिन्या जनतया सह देवर्षिपितृणां सम्बर्द्धनस्य घनिष्ठं सम्बन्धो विद्यत इति सर्वे सचेतसो भारतवर्षं कर्मभूमिं धर्मभूमिं च मन्यन्ते ।

## भारतवर्षस्य विशिष्टताप्रतिपादनम् ।

चतुर्दशभुवनेषु भूर्लोकोऽप्येकं भुवनम् । अयमेव भूर्लोकः केवलं मध्याकर्षणशक्तिविशिष्टः । मृत्युलोकः प्रेतलोकः नरकलोकः पितृलोकश्चैते चत्वा-रोऽपि भूर्लोकस्यैवान्तर्विभागरूपाः सन्ति । अतोऽस्माकं मृत्युलोकोऽयम् एकस्य ब्रह्माण्डस्य चतुर्दशभागेषु एकस्य विभागस्य चतुर्थांशः । देवाः, असुराः, अत्रैव लोके स्वीयभोगसमाप्तिसमनन्तरं नूतनकर्मसंग्रहार्थं जन्मानि गृह्णन्ति । ततश्च ते पुनरपि गन्धर्वादिदेवयोनिम् असुरयोनिं वा प्रपद्यन्ते । एतादृश-मध्याकर्षणशक्तिविशिष्टस्य मृत्युलोकस्य मस्तकस्वरूपं भारतं वर्षम् , प्रकृति-रप्येतदीया सर्वाङ्गपूर्णा चेत्यस्य महिमा सर्वोत्कृष्टः प्रतिपादितः ॥ ५८—६४ ॥

## अष्टपञ्चाशत्तमे अध्याये भारतप्राचीनभूगोलविमर्शः ।

अध्यायेऽत्र भारतवर्षीयाणां देशानां बहुविधा भेदाः समुपवर्णिताः । तदानीन्तनास्ते ते प्रदेशास्तत्कालभूगोलशास्त्रानुकूलाः प्रतिपादिताः । परिवर्त्तनशीलत्वात् कालस्य, इदानीं तत्तत्प्रदेशानामन्वेषणं निरतिशयदुरूहमसम्भवञ्च ॥

## कूर्मचक्रेण फलितज्योतिःसाहाय्यनिरूपणम् ।

यत् किल भारतवर्षं कूर्मचक्रं कृत्वा तेन च राशिनक्षत्रादिसम्बन्धो निरूपितः, स हि ज्योतिःशास्त्रविषयः । पुराणेषु तन्त्रेषु च आत्मानात्मविचार-अध्यात्मतत्त्वधर्माधर्मनिर्णय–लोकालोकस्वरूपकथनाद्यतिरिक्तं ज्यौतिष–वैद्यक–शकुन–जीवशास्त्रादीनां वर्णनमप्युपलभ्यते। पुराणेषु वैज्ञानिका विषयास्तन्त्रेषु च क्रियासिद्धांशा आधिक्येनोपवर्णिताः समुपलभ्यन्ते । प्रत्येकसौरजगतश्चतुर्दिक्षु अन्यान्यपि सौराणि जगन्ति परिदृश्यन्ते, तान्येव विशिष्टशृङ्खलानुसारतो नक्षत्राणि राशयश्च प्रतिपाद्यन्ते । नक्षत्राणि सौरजगन्ति वेदितव्यानि । नक्षत्रावलीनां यो विभागः, स हि राशिरित्युच्यते । यथा किल स्वस्य सौरजगतो ग्रहोपग्रहाणाम् आकर्षणविकर्षणशक्तिप्रभावः पार्थिवजीवेषु परिपतति, तथैव नक्षत्रराशीनामपि प्रभावः पतत्येव । अस्यैव प्रभावस्याधारभित्तौ पूज्यपादैस्त्रिकालदर्शिभिर्महर्षिभिः फलितं ज्यौतिःशास्त्रमारचितम् । ज्यौतिषं सत्यमूलकमतिसूक्ष्मविज्ञानपरिपूर्णं च । फलितज्यौतिषसाहाय्यप्रतिपादनार्थं, भारतवासिनां सहायताप्रदानार्थं च कूर्मचक्रवर्णनमत्रानुष्ठितम् ।

## भारतस्य सर्वतः प्राधान्यप्रतिपादनम् ।

प्रत्येकब्रह्माण्डे चतुर्दश भुवनानि भवन्ति । एतेषां भुवनानां पृथक् पृथगन्तर्विभागा अपि भवन्ति । अस्मिन् ब्रह्माण्डेऽपि भूः, भुवः, स्वः, महः, जनः, तपः, सत्यं चेति सप्तलोका उपरि विद्यन्ते; अधश्चापि अतल-वितल-सुतल-तलातल-रसातल-महातल-पातालाख्याः सप्त लोकाः सन्ति । उपरि सप्तलोकेषु देवानाम् अधः सप्तलोकेषु चासुराणां निवासो वर्त्तते । तेषु तेषु लोकेषु तत्तद्देवासुरा जीवा यातायातमपि कुर्वन्ति । देवराजस्य राजधानी स्वर्गलोके, असुरराजस्य च पाताललोके वर्त्तते । तेषां चतुर्दशलोकानाम् अनेके अन्तर्विभागा अपि वर्त्तन्ते । यथा किल भुवर्लोकस्यान्तर्विभागा गन्धर्वलोकादयस्तथैव भूर्लोकस्यापि मृत्यु-प्रेत-नरक-पितृनामकाश्चत्वारो लोका अन्तर्विभागरूपेण विराजन्ते । एषां चतुर्णामपि लोकानां नियामको धर्मराजो भगवान्, यमः तस्य च-

राजधानी पितृलोके वर्त्तते । यमस्य च दूता अन्येषु मृत्यु-प्रेत-नरकाख्येषु त्रिषु लोकेषु व्यवस्थां कुर्वन्ति । मृत्युलोकोऽयं वस्तुतः चतुर्दशानामपि भुवनानां केन्द्ररूपः । अत्रैव मातृगर्भतो जीवा जन्म लभन्ते । निखिलैरेव जीवैः स्वकीय-शुभाशुभकर्मभोगानन्तरं मृत्युलोक एव समुत्पद्य नूतनानि कर्माणि संगृह्यन्ते । यतो हि मृत्युलोकोऽयं कर्मभूमिः । अत्रैव स्वतन्त्ररूपेण विविधानि शुभाशुभकर्माणि विधातुं सौकर्य्यं विद्यते । देवैरसुरैश्च स्वस्वलोकेभ्यो नाग्रे गन्तुं प्रभूयते । ते हि अत्रैव मृत्युलोके जन्मासाद्य पुनर्निजनिजकर्त्तव्यानुसारमुपरि लोकेषु गच्छन्ति । अस्मादेव कारणाद् ब्रह्माण्डेऽत्र मृत्युलोकस्यास्य प्राधान्यमस्ति । मृत्युलोकस्य भारतं किल उत्तमाङ्गमिति पूर्वं प्रतिपादितम् । उत्तमाङ्गत्वादेवात्र भारते वर्षे भाषा-शरीर-रूपरेखावाण्यादीनां प्रकृतेश्चैतादृशी पूर्णताऽत्रत्यस्त्रीपुरुषेषु परिदृश्यते । अस्मादेव हेतोरत्र सीतासावित्रीप्रभृतयः पतिव्रतधर्मपरायणाः स्त्रियः, ध्रुवप्रह्लादाद्या बालकाः, रघुयुधिष्ठिराद्यो राजानः, शिवदधीचिप्रभृतयो दातारः, विश्वामित्र-वशिष्ठाद्यास्तपस्विनः, श्रीरामकृष्णादयोऽवताराः, याज्ञवल्क्य-पतञ्जलिप्रभृतयो योगिनः, मार्कण्डेय-कपिलादयो मुनयः, भरद्वाज-अत्रिप्रभृतयो ऋषयः, वाल्मीकि-व्यासाद्या ग्रन्थप्रणेतारः, अनसूया-लोपामुद्रादयस्तपस्विन्यः, मदालसा-सुकन्या-समाना गृहिण्यः प्रादुरभवन् महिमानं चास्य समवद्र्धयन् । आधुनिकाः स्थूलदृष्टयः पदार्थविद्यावेदिनो वैज्ञानिका अपि भारतवर्षस्य प्राकृतिकीं पूर्णतां स्वीकुर्वन्ति मन्यन्ते च यत् भारतसदृशः पूर्णप्रकृतियुक्तः प्रदेशो नाऽन्योऽस्तीति । सर्वोन्नतः सर्वतः समृद्धिशाली च नगाधिराजो हिमवान् अत्रैव विराजते । सर्वतोऽधिकपुण्यतमशक्तिशालिनी दैवविभूतिसंवलिता भगवती त्रिलोकपावनी गङ्गा भारते वर्षे एव निभाल्यते । एतस्या महामहिमशालिनं प्रभावं "जर्मथ्योरी" वादिनोऽपि मन्यन्ते । ब्राह्मण-क्षत्रियादिचतुर्वर्णात्मिका भूमिः षण्णामपि ऋतूनां यथाक्रमप्रादुर्भावः समकालमपि तेषां विलासः, श्वेतपीत-कृष्ण-गौराङ्गा मानवाश्च भारतवर्षे एव परिदृश्यन्ते । सर्वदेशेषु लब्धजन्मान उद्भिज्जाः पशवश्च भारते समानीताः प्राणान् धारयन्ति, नान्यत्र कुत्रापीति । इत्यादिदिग्दर्शनेनाल्पेन भारतस्य स्थूलप्रकृतिपूर्णता सिध्यति । अत्रत्यं धर्मविज्ञानम्, तत्त्वज्ञानम्, वेदाः, पुराणानि, धर्मशास्त्राणि दर्शनानि चास्य सूक्ष्मप्रकृतिपूर्णतायाः प्रत्यक्षप्रमाणभूतानि । अतो हि भारतवर्षमिदं स्वाभाविकरूपेणैव मृत्युलोकस्योत्तमाङ्गभूतम् । यथा किल मस्तक एव ज्ञानेन्द्रियाणां केन्द्रस्थानं तथैव दैवजगतोऽपि घनिष्ठः सम्बन्धः सार्कं भारतवर्षेणैव वर्त्तते । अत एव हेतोः कलियुगस्यैकसहस्रवर्षेषु व्यतीतेष्वेव देवा अत्र प्रत्यक्षीभव-

न्तिस्म। देवर्षिपितॄणां घनिष्ठसम्बन्धस्य विद्यमानता, चतुर्णामपि युगानामाविर्भावः तत्प्रभावः, वर्णाश्रमशृङ्खलासद्भावश्चेत्यादि भारतवर्ष एव विद्यते ॥ १-११ ॥

षष्टितमाध्याये इतिहासपुराणशङ्कासमाहितिः।

सनातनधर्मकालनिर्णयविज्ञानमनुसृत्य १७२८००० वर्षात्मकं सत्ययुगं, १२९६००० वर्षात्मकं त्रेतायुगं, ८६४००० वर्षात्मकं द्वापरयुगम्, ४३२००० वर्षात्मकं कलियुगमित्युच्यते। एवं हि चतुर्युगमानं, ४३२०००० मानववर्षात्मकं महायुगं निर्दिश्यते। एकसप्तति ७१ महायुगानाम् एकं मन्वन्तरमुदाह्रियते। मन्वन्तरपरिवृत्तौ मनुपदेऽन्यो देवः प्रतिष्ठितो भवति। इमां किल वर्षसंख्यां निरीक्ष्य बुद्धिमन्तो विद्वांस इदमवधारयितुं प्रभविष्यन्ति यदेस्मिन् महति काले प्रकृतेः कियत् परिवर्त्तनं भवति। पदार्थविद्यावेदिनस्त्विदमामनन्ति यत् द्विसहस्रवर्षानन्तरं प्रस्तरगृहादीनामपि न कापि सत्ता स्थातुमर्हति। एवं प्रकारेण महता कालेन पर्वतवननदीप्रभृतीनामपि स्वरूपपरिवर्त्तनं भवति। अस्मिन् अध्याये प्रतिपादितं वर्णनमेतादृशमन्यान्यमन्वन्तरीयमस्ति। अतो हि अस्माकं वर्त्तमानमन्वन्तरभूगोलवर्णनेन सह एतदध्यायप्रतिपादित-भूगोलवर्णने भवितुमर्हति महत्पार्थक्यमिति कः सन्देहोऽत्र ? अतो भूगोलेनैतेन यदि नूतनभूगोलस्य सामञ्जस्यं न स्यात्तर्हि नास्ति कोऽपि शङ्काऽवसरः। इदमपि विवेचनीयं यत् पुराणेतिहासशास्त्रेषु अध्यात्माधिदैवाधिभूतपदार्थानामपि वर्णनं सहैव प्रचलति। यत्राधिक्येनाधिभौतिकवर्णनमसावितिहासः, यत्र च प्राधान्येन आधिदैविकं वर्णनं तच्च पुराणमित्यनयो र्भेदः। अस्माकं पुराणेतिहासेषु समुपवर्णिता विषया न लौकिकेतिहासरूपाः। ते हि धर्मग्रन्थाः सन्ति। यथात्रोदाह्रियते—रामायणे रामस्य, महाभारते कृष्णस्य, अन्येषामपि बहूनां राज्ञां वंशवर्णनमुपलभ्यते। अतएव रामायण-महाभारताविति-हासग्रन्थौ। अन्यानि सर्वाणि पुराणानि। महाभारतसम्बन्धे समुद्भूतां शङ्कां समाधत्ते—महाभारतयुद्धे पञ्चसहस्रवर्षप्राचीने सत्यपि तत्रत्यदैवघटनावलीषु प्रतिपादितस्य अर्जुनादीनां स्वशरीरेण स्वर्गगमन-असुरलोकगमनतत्रत्यासुरयुद्धादिरहस्यस्येदमेव कारणं यत् सत्य-त्रेता-द्वापरयुगेषु कलियुगस्य चैकसहस्रवर्षव्यतिगमनपर्यन्तं साधारणतो देवा मृत्युलोकेऽत्र यातायातं कुर्वते स्म, ऋषयो महर्षयश्च यान्त्यायन्तिस्म, दैवबलेन तत्क्षणमेव दैवपिण्डस्य मानवशरीरस्य रूपेण परिणतिर्युज्यते स्म, पुण्यात्मना पुरुषेण ऋषिगणस्य साहाय्यं प्रत्यक्षरूपेण समलभ्यत। अत एव हेतोर्महाभारते अलौकिकासाधारण-

विषयाणां वर्णनमुपलभ्यते । अत्र नास्त्येव शङ्कावसरः । इदं किल पुराणेतिहासयोर्वैशिष्ट्यमेव, यत्रैकस्यामेव गाथायाम् अधिभूताधिदैवाध्यात्मिकस्य व्यक्तिविशेषस्य सहैव वर्णनमुपलभ्यत इति । यतोऽस्माकमितिहास पुराणानि, न लौकिकेतिहासरूपाणि, तानि तु धर्मरहस्यप्रदर्शकपुस्तकान्यवगन्तव्यानि । पुराणरहस्यं जिज्ञासमानेन पुरुषेण तत्र तत्र पुराणेतिहासपुस्तके प्रत्यधिगाथम् अध्यात्माधिदैवाधिभूतानां घनिष्ठसम्बन्धनं समानरूपेण तदस्तित्वञ्च नूनं स्वीकर्त्तव्यम् । यथात्रोदाहृतिः—यदि कुत्रचिदुच्यते यत् हे सूर्यदेव ! त्वं मयि वर्त्तसे, तर्हि स्वनेत्रेन्द्रियस्थतन्मात्रारूपं लक्ष्यकृत्येदमुक्तमित्यवगन्तव्यम् । यदि त्वं विश्वज्योतिरसीत्युच्यते तर्हि अधिभूतसूर्यमण्डलं लक्ष्यकृत्योक्तमित्यवधारणीयम् । त्वं चतुर्भुजस्वरूपेण दर्शनं देहीत्युच्यते तर्हि अधिदैवसूर्यमूर्त्तिं लक्ष्यीकृत्येदं प्रतिपादितमित्यवगन्तव्यम् । एवं प्रकारत इतिहासपुराणानां प्रत्येकगाथारहस्यावगतिकाले त्रिविधविज्ञानधारणा नूनं परिरक्षणीया ॥ ७-१५ ॥

## गाथावैचित्र्यविमर्शः ।

सर्वथा सत्यापि गाथेयं विविधवैलक्षण्यगोचरतया नार्वाचीनानां बुद्धौ निविशते, यतोऽयम् अन्य मन्वन्तरीयो वृत्तान्तः । तस्मिन् मन्वन्तरे दैव्याः शक्तेराविस्तिरोभावावन्यविधावास्ताम् । तत्कालीनमानवपिण्डप्रकारश्चान्यप्रकारक एवासीत् । तदेवंविधा गाथाऽस्माकमर्वाचीनधारणां नूनमत्येति ॥ १-७६ ॥

## मैथुनावसरे यथाध्यानं प्रसवविवेचनम् ।

मैथुन्यां सृष्टौ ध्यानयोगेन सह प्रसूतेरन्तरङ्गो बलीयान् सम्बन्धो वरीवर्त्तीति प्राचीना आर्याः सम्यग्विदन्ति स्म । अर्वाचीना विज्ञानविदस्तु साम्प्रतं विज्ञानमेनच्छ्ववादिसृष्टौ व्यवहरन्ति, तथा हि, ते क्षुद्रजातीय-सारमेयस्य तथाविधशुन्या सह मैथुनावसरे श्रोच्चजातिकं कुक्कुरं तत्समक्षे बध्नन्ति ततस्तथाविधोत्तमश्वजातीया प्रसूतिः प्रजायते यथाविधायाः सन्ततेर्धारणं क्षुद्रसारमेयीगर्भेऽशक्यमेवासीत् । एतत्सुकौशलकर्मणो नित्यमिदानीन्तना वैज्ञानिकाः सारमेयसृष्टौ फलं लभन्ते । तदेवंविधनव्यनियमप्रसवाः सारमेयाः तथाविधोच्चजातीयसारमेयवदेवाभिलक्ष्यन्ते केवलं कायतस्ते न्यूना भवन्ति । पाश्चात्यविज्ञानविदोऽद्यावधि नेमां विद्यां यथावदवबुध्येरन् तेषां पाण्डित्यं तु सारमेयसृष्टावेव परिसमाप्यते, त्रिकालदर्शिनो महर्षयस्त्वेतद्विद्यापारमगच्छन् । इत्थमेवाश्वमेधीयाश्वोत्पादने विज्ञानमवधार्यताम्, अश्वमेधयज्ञे यादृग्विविध-

वर्णमयो हयः प्रयुज्यते तथाविधं नैकरङ्गरञ्जितं मृण्मयमनोज्ञमश्वं निर्माय संस्थापयेत्, तत्सम्मुखमुत्तमाश्वासम्भोगविधानतो यथाप्रयोजनमश्व उपलभ्यते स्म। विज्ञानस्यास्य व्यवस्था शास्त्रेषूपलभ्यते, न केवलमेतद्विज्ञानमश्वसृष्टावेव महर्षयो न्यवध्नन् अपि तु मानवसृष्टावपि तैरेतद्विज्ञानानुमोदिता विविधाः सदाचारपद्धतयो निबद्धाः, या सदाचारशृङ्खलाऽस्माकमद्यावधि गार्हस्थ्यधर्मे दृष्टिगोचरतामापद्यते। यथा किल, चतुर्थेऽह्नि ऋतुस्नाता भार्या स्नानानन्तरमेव पत्युर्मुखमवलोकयेत् तदभावे देवरादीनां मुखम् ऋषिदेवतावताराणां वा चित्रं विलोकयेत्। अस्मादेव सद्गृहस्थानां शयनागारे ऋषिदेवतावतारचित्रस्थापनविधिर्निर्दिष्टः।

अस्य पुराणस्यास्मिन् स्थले ऋषिप्रेमप्रमत्ताऽप्सरसं प्रतार्य यक्षेणर्षिरूपधारिणा तया सह मैथुनमकारि, तदाऽप्सरा ऋषिध्याने निमग्नाऽऽसीत्, तद्ध्यानबलेन तद्गर्भे न केवलमाकृत्या गुणैरपि ऋषिवत् पुत्रो बभूव। इयं गाथाऽत्यन्तसूक्ष्मविज्ञानमूलिका ॥ १-७ ॥

## पञ्चषष्टितमेऽध्याये पातिव्रत्यवत् पत्नीव्रतप्रयोजननिर्देशः।

वैदिकविज्ञानं निश्चिनोति कर्ममीमांसाशास्त्रमपि समर्थयति यत्सृष्टेरारम्भादेव स्त्रीधारा पुरुषधारा चेति द्विधा धारा प्रवहति, इमे धारे उद्भिज्जयोनौ विद्येते, एष एव क्रमः स्वेदजाण्डजप्रभृतियोनिष्वपि। एते एव द्विविधे धारे मनुष्ययोनौ मिलित्वा सृष्टेः पूर्णत्वं प्रतिपादयतः। तथा हि, स्त्रीपुरुषौ द्वावपि पार्थक्यादपूर्णौ, यदा खलु विवाहसंस्कारेणोभावपि दाम्पत्यभावं भजमानौ सम्मिलितौ स्यातां तदैव सर्वश्रौतसंस्कारयागयज्ञादीनामधिकारमधितिष्ठतः। तस्मात्प्रेमप्रकर्षेण धर्मविमर्शेन सुखशान्तिनिर्देशेन यथा वा भवेत् स्त्रीणामेकपतिव्रतं पुरुषाणामेकपत्नीव्रतञ्च परममंगलमयमुपवर्णितं शास्त्रसमुच्चये। यमादर्शं भगवान् रामोऽपि स्वजीवनेऽनुष्ठितवान्। अत्र शङ्कासमाधानाय विविच्यते, स्त्रीजातेः सदाचारस्तपोधर्मप्रधानस्ततस्तत्कृते परपुरुषचिन्तनमपि महत् पापम्, परञ्च पुरुषधर्मो यज्ञप्रधानस्तस्माद्धि पितृपिण्डप्रयोजनपुत्रनिमित्तमपुत्राणां पुरुषाणां कृते द्वितीयपत्नीग्रहणमनुमोदितं शास्त्रैः। किञ्च, गौणोऽयं नैष मुख्यो धर्मः। कामलिप्सया पत्नीग्रहणं कामजं कर्म न खलु धर्मजम्। आदर्शधर्मस्त्वेकपत्नीव्रतमेव। अस्यैव धर्मस्य प्रतिपादनमत्र गाथायामुपपादितम् ॥ १२-१७ ॥

## स्वारोचिषमनोरुत्पत्तौ शङ्कासमाधानम्।

इन्द्रवरुणादिवन्मनोः पदमपि देवपदमास्ते। कालप्रमापकं देवपदं मनु-

रभिधीयते। प्रत्येकं मन्वन्तरे तत्पदाधिकारिव्यक्तिः परिवर्त्यते । कियदब्दात्म-कमेकमन्वन्तरमिति पूर्वमेवोपवर्णितम् । गाथेयं दैवीं सृष्टिं विवृणोति न खलु वैजीं मानवीयां सृष्टिमिति सुधियो विभावयन्तु । सा मृगी वनदेव्या-सीत्, वनदेवी पशुरूपमादातुमर्हति । स्वर्गादावारूढ़पतितजीवानां पशुसृष्टिः प्रजायते, तत्रत्याः कोकिलमृगादयो जन्तवो भवन्त्यारूढ़पतितजीवाः । ततो देवर्षितो मनोहारिण्यां हरिण्यामौरससूनोः स्वारोचिषमनोर्मनुजाकृतेर्जन्म न दार्शनिकं सिद्धान्तं विरुणद्धि, न वास्त्यत्र सन्देहदोलारोहणावसरः । मृत्युलोक-सृष्टिर्न दैवलोकसृष्ट्या सममन्वेति, यतः स्वर्लोकादौ गर्भधारणक्रमः सन्तते-रुद्भवप्रकारश्चान्यविध एवास्ते । विशेषतः समाधिगम्यगाथायामस्यामन्य-मन्वन्तरीयायां वैलक्षण्यं भवितुमर्हत्येव ॥ २५-३० ॥

### अष्टषष्टितमेऽध्याये अष्टनिधिनिरूपणम् ।

पद्मादयोऽष्टनिधयः स्वतो दार्शनिकविज्ञानोपयुक्ताः । एतद्विज्ञानविदो मानवा ज्योतिर्विदश्चरित्रज्ञाः पण्डितप्रकाण्डाश्च वोभवन्तो बहुविधं मनुष्य-गोचरं ज्ञानमाप्तुमीशते । पुराऽस्यां भारतभूमौ किमुत योगविद्यामध्यात्म-विद्यां मानवविज्ञानं नानाजीवतत्त्वविज्ञानं स्त्रीपुषयोर्विज्ञानं पदार्थविज्ञानं पर-लोकरहस्यमेवंविधानेकविषयपूर्णज्ञानं पुस्तकैरुपलभ्यते स्म । इदानीन्तु तत्-पुस्तकानां सहस्रतमांशोऽपि न लभ्यते ॥ १-४७ ॥

### ऊनसप्ततितमाऽध्याये स्त्रीपुरुषधर्मयोर्मौलिकविज्ञानम् ।

दाम्पत्यगोचराशौचाचारविवेचनं धर्मरक्षणविज्ञानञ्चातीव दुर्ज्ञेय-मस्ति । यो हि शास्त्रेषु शुद्धाशुद्धविवेको वर्णितः, तद्धेतुर्मानवीयकर्मभिरवग-म्यते स्म । तथा हि, जननमरणाद्याशौचः चन्द्रसूर्यग्रहणाशौचो वा यदा जायते, तत्प्रभावस्तदा मनुष्याणां मनोमयकोषमण्डलमावृणोति, तथात्वे मानवानां कर्मकदम्बे बाधा जञ्जन्यते । विष्ठामूत्रादिजन्यबाह्याशौचोऽपि मानवीयमन्नमयकोषं विदूषयन्नन्यानपि कोषान् स्वप्रभावान्वितान् विधत्ते । ततः कर्मनिष्पत्तौ संस्कारसंग्रहे च विपुलं विघ्नमुपजायते । तस्माद्धि कर्मोपासनादियज्ञजाते बाधकत्वेनाशौचस्य तन्निवारणमावश्यकं मन्यते, शुद्धा-शुद्धयोः स्पृश्यास्पृश्ययोश्च सोपपत्तिकं विज्ञानमेतदेव । अपरं च स्त्रीपुरुष-सम्मेलनादेव मानवप्रकृतिः पूर्णत्वं प्राप्नोति, प्रकृतिराज्याद्बहिरात्मनः स्वरूपोपलब्धेरन्या कथा, किञ्च यावत् सृष्टिप्रपञ्चं प्रकृतिराज्यं वा तावत् स्त्रीपुरुषयोः पारस्परिकसम्बन्धो दुर्निवारः । परमपुरुषस्य परमात्मनो ब्रह्मप्रकृते-

महामायायाश्च सगुणत्वमेव सृष्टिस्थितिलयकारणम् । सृष्टिकाले द्वैतदशायां वा चिन्मयस्य पुरुषस्य त्रिगुणात्मिकायाः प्रकृतेश्च पारस्परिकयुगलयोगे दाम्पत्य-भावो विद्यत एव । महादेव्यालिङ्गितो महादेवो मिलित्वा परस्परमेव सगुणां दशां सम्पादयति । सैव सगुणब्रह्मदशा । ततो ब्रह्मा विष्णुर्महेशोऽपि शक्त्या सहैव स्वकार्यमनुतिष्ठति, तदीया प्रकृतिर्ब्राह्मी, वैष्णवी, रौद्री, माया, शक्तिर्वा भण्यते । जीवधारायां तदेव शक्तिद्वयं प्रधानपुरुषात्मकं त्रिगुणमयं चिन्मयं च सन्नियतकार्यकलापं निरन्तरं कुरुते । पुनस्ते एवोभे शक्ती स्त्रीपुरुष-धाराभ्यां धरायामुद्भिज्जस्वेदजाण्डजजरायुजादिचतुर्विधभूतसङ्घे पार्थक्येन प्रवहतः । किञ्च, तयोः सम्मेलनादेव देवमानवयोः पिण्डः प्रपूर्यते । देवयोनौ ब्रह्मविष्णुमहेशानारभ्य वसुरुद्रादित्यादि महेन्द्रादिकं यावन्न केऽपि देवाः शक्तिमन्तरेण स्वीयं कार्यं कर्त्तुं प्रभवन्ति, न वा तत्पदोपयोगिनो भवन्ति, तथा किल मनुष्यक्षेत्रे मानवः सस्त्रीक एव सर्वविधान् प्रवृत्तिधर्माननुष्ठातुमु-पयुनक्ति । अपि च पुरुषेण स्त्री स्त्रिया च पुरुषः कार्यक्षमत्वं भजते स्वधर्म-पालनेनाभ्युदयनिःश्रेयसमार्गमपि सुगमयति । स्त्रियं विना पुरुषस्य पुरुषमृते स्त्रियो वा रक्षणमशक्यं स्यात् । यथा सृष्टौ द्वयोः प्रयोजनं तथा सृष्टिरक्षणे स्थितावपि नितान्तमुभावावश्यकौ । एवं स्त्री खलु लयरूपायां मोक्षदशाया-मपि साधनम् । यस्मादियं यथावत् प्रवृत्तिधर्मपालनेन पुरुषस्याभ्युदयं विधाय निःश्रेयसं साधयति, स्त्रीसाहाय्यं सर्वत्रैवापेक्ष्यते निःश्रेयसं केवलं पदम्, अन्ये सर्वे किलात्मोन्नतिमार्गा अभ्युदयस्यैव, तद्द्वारस्तु स्त्रीपुरुषसम्मेलनेनैव संवाह्यः स्यात् । यदा द्वाभ्यां द्वावपेक्ष्येते तदा यथाक्रममेकपतिव्रतमेकपत्नीव्रतं च स्त्रीपुरुषयोः प्रधानो धर्मः प्रशंसनीयश्च । आदर्शस्यास्य प्रतिष्ठा पूर्व-मन्वन्तरेष्वासीत्, इतीयं गाथाऽभिव्यनक्ति ॥ ५६—६५ ॥

## कालभेदान्नैककथासंशयापनोदनम् ।

सर्वाः किलैता गाथा यावदुत्तमाख्यमन्वन्तरीया वर्तन्ते । प्रत्येकं मन्वन्तरं मनुष्यस्य ३०६७२०००० वर्षात्मकं भवति, एतावद्विपुलकालावधि किमुत चतुर्विधभूतसङ्घे मनुष्यसृष्टौ देवसृष्टौ वा सर्वत्रैव महत् परिवर्त्तनं निःसंशयं सम्भवेत्, नात्र कस्यापि किञ्चिद्वक्तव्यम् । ततः कालविशेषे पशुपक्षि-मनुष्याणां शक्तौ भेदस्तेषां मनुष्यनागदेवासुरलोकेषु गतागतसामर्थ्यं भवि-तुमर्हति । तदेवंविधकथाकदम्बे यदि काचिदाश्चर्यमयी घटना निशम्यते, न तत्र किमपि संशयकारणमवगम्यते । अपरञ्च, यथा स्थूलराज्यसञ्चालका नाना देवा असुराश्च देवांशमसुरांशञ्च बिभ्राणाः स्वकार्याणि कुर्वन्ति तथैव वृत्ति-

राज्यपरिचालका देवा असुराश्च भवन्ति, अतो देवशक्त्या वृत्तिपरिवर्त्तनमपि शक्यं स्यात् ।

## चतुःसप्ततितमाऽध्याये वियोनिजस्य तामसमनोर्जन्मवृत्तान्ते संशयसमाधानम् ।

तामसमन्वन्तरे कालाधिपतेर्मनोर्देवस्य जन्मकथायां नैकाः शङ्काः समुत्पद्येरन्, तत्समाधनमनायासं यथा स्वतो निष्पद्येत, तदर्थमत्र किञ्चिद्विवेचनमावश्यकं प्रतीयते । तथा हि—प्रत्येकं मन्वन्तरं मानवीयकियद्वर्षात्मकं भवति तत्तु पूर्वमन्वन्तरकथाप्रसङ्गे समुदाहृतम्, तद्विपुलकालविपर्ययादुभयत्रापि मनुष्यदेवलोकसृष्टौ महत् परिवर्त्तनं सम्भवेत्, अपरञ्च विभिन्नमन्वन्तरेषु सहजमानवदेवपिण्डानां शक्तितारतम्यात् त्रिष्वपि पिण्डेषु त्रिविधसृष्टिसमुद्भवः शक्येत. यथा-मृगात्मके सहजपिण्डे देवपिण्डवदिच्छामात्रेणैव गर्भाधानम्, यथा वा सहजमानवपिण्डाभ्यां त्वरितं देवपिण्डप्रवेशः, एतत् सर्वं शक्तिवैलक्षण्यस्यैव फलमास्ते । साम्प्रतं तु मानवपिण्डाद्बहिर्भूय जीवो निजपापफलभुक्तये यथादण्डं सहजपिण्डं प्रविशति, पुण्यप्रभावेण वा देवत्वलाभाय देवपिण्डे निविशते । नास्मिन् युगे अस्मादधिकसामर्थ्यं कुत्रापि पिण्डे प्रकटितमवलोक्यते, तस्मादेवंविधा शङ्का जायते । किञ्च, पूर्वमन्वन्तरेषु देशकालादिवैलक्षण्येन शक्तिवैलक्षण्यमासीत् । गहना कर्मणो गतिः, तस्मादमुष्मिन् मन्वन्तरे मानवपिण्डधारिणा पित्रा सहजपिण्डधारिण्या मातुः सकाशात्तादृक् पुत्ररत्नमजनि, यो हि पुत्रः परमपराक्रमी राजा बभूव, तपोबलेन चान्ते देवपिण्डप्रतिष्ठितां मनोर्दुर्लभां देवपदवीं प्राप्तवान् ॥ १-६२ ॥

## रेवत्यां रैवतमनोरुद्भवे शङ्कासमाधानम् ।

पूर्वं बहुवारमुक्तं यत् पौराणिकं विज्ञानमवगन्तुं समाधिलौकिकपरकीयभाषारहस्यं तदीयां वर्णनपद्धतिं तद्भावविन्यासविमर्शञ्च नूनमवगच्छेत् । एवमध्यात्माधिदैवाधिभूतवर्णनरहस्यमपि निरन्तरमेवावधेयम् । रेवतीनक्षत्रादलौकिककन्योत्पत्तेर्गाथां याथातथ्यतो ज्ञातुं पूर्वोक्तषड्विषयविवेचनमावश्यकं प्रतीयते । तथा ह्येषा वर्णनशैली लौकिकपरकीयाभ्यामुभाभ्यां भाषाभ्यां विभूषिता वरीवर्त्ति, आधिदैवाधिभौतविज्ञानसम्मिश्रणमप्यत्रावेद्यते । रेवतीनक्षत्रपतनमाधिदैविकं तत्त्वम्, अत्रायमभिप्रायो यद् रेवतीताराधिदेव्या अंशोऽवतीर्य मर्त्यलोके कन्या बभूव, एवंविधा अवतारा भगवतो विष्णुरुद्रादेरारभ्य सर्वस्य ऋषिदेवदेवीगणस्य जायन्ते । अवतारप्राप्तौ सत्यामपि न नित्यदेवपदं नश्यति भ्रश्यते वा । कन्याया एतस्या जन्मादिवर्णने लौकिकभाषा,

अन्यान्यकर्मविश्लेषणे च परकीयभाषा परिचीयते। यदा किल महर्षयः पुराणप्रतिपादनावसरे समादधति, तदा तेषां सविकल्पसमाधौ विचारानुगतावस्थायामेते विषयाः प्रतिभासन्ते, तस्मादेव तच्चेतसि कल्पान्तरीया मन्वन्तरीया वा घटनाः स्वत एव स्फुरन्ति । योगयुक्तान्तकरणाः समाधिसिद्धा योगिनोऽवगन्तुमेतदीशते यदस्मितानुगतावस्थात आनन्दानुगतावस्थायां ततोऽपि विचारानुगतदशासम्प्राप्तावेव नूनमेवंविधाः स्मृतयः समुदेतुं शक्नुयुः ॥ १८-२६ ॥

## पञ्चसप्ततितमाऽध्याये ग्रहणरहस्यनिर्देशेन तपःप्रभावप्रख्यापनम् ।

पुराणे ग्रहणगोचरमाख्यानकमुपलभ्यते यत्किल सूर्याचन्द्रमसौ राहुर्ग्रसति। नास्यैतत् तात्पर्यं यत्सूर्यलोकश्चन्द्रलोको वा राहोरुदरमुपरागे प्रविशति। किञ्च, राहुः छायात्मकक्रियाया असुरोऽधिदेवो वर्त्तते, तथा च ग्रहणावसरे सूर्याचन्द्रमसोः पृथिवीमभितोऽभिसर्पिणी शक्तिरवरुध्यते, नात्रोभये विषये सन्देहावसरः, ततो नः पृथिव्याः परिमाणतो रविराकेशयो राहुणा ग्रासः स्वयं सिध्यति। परञ्च तस्मिन् समये सूर्यलोकश्चन्द्रलोकश्च यथावत् संन्तिष्ठते तयोरधिष्ठातृदेवता च यथापूर्वमास्ते, न तत्र किमपि व्यतिक्रमणमुपजायते, केवलं तदीया शक्तिर्या किल ग्रहणसमये पृथ्वीलोके कार्यं न कुरुते स्म, सैव शक्तिर्ग्रहणान्ते पुनः कार्यकारिणी जायते। इत्थमेतावदत्रावधार्यताम्, यत् ऋषेस्तपःप्रभावाद् रेवत्याः कर्मप्राबल्याच्च रेवतीनक्षत्रशक्तौ या बाधा समजनि, साम्प्रतमेतत्कन्यापितुर्महर्षिप्रमुचस्य तपोबलेन सा दूरमगमत्, इत्थं विषयविवेचने विहिते न पुराणपाठकाः कुत्रापि शङ्केरन् ॥ ६१—७६ ॥

## षट्सप्ततितमेऽध्याये अधिकारत्रयफलनिर्देशप्रसङ्गे मुक्तिभेदवर्णनम् ।

पूर्वकर्मजन्यो वरीयानधिकारो जीवैरधिगम्यते, तत्क्षयस्य कर्मबन्धनाद्विरतौ तात्पर्यं ज्ञेयम्। विषयोऽयं नितान्तगूढरहस्यमयः। तथा हि, मुक्तिस्त्रिविधा भवति, तत्राद्या सहजकर्मजा मुक्तिर्जीवन्मुक्तदशायामत्रैव मर्त्यलोके सिध्यति, जनकादयो राजानो व्यासवशिष्ठादयो महर्षयश्चात्र निदर्शनानि, द्वितीया मुक्तिस्तु जैवकर्मणा सम्पद्यते। जीवो यदा महदुग्रं तपस्तप्त्वा आत्मज्ञाननिष्ठो नश्वरं शरीरमस्मिन्नेव लोके समुत्सृजन् शुक्लगत्या सप्तममूर्द्ध्वलोकमारूढो निःश्रेयसपदमधिकरोति तदा मुक्तिर्द्वितीया ज्ञेया। दृष्टान्तश्चात्र ब्रह्मचारी पितामहो गाङ्गेयो भीष्मः। उभाभ्यां विलक्षणा तृतीया मुक्तिरव-

गन्तव्या, यो हि जीवः स्वप्रबलपुण्यप्रभावेण भगवतो धर्मराजस्य मनोस्त्रिमूर्त्तेर्वा पदं प्रतितिष्ठन् सर्वोच्चदेवपदाधिकारमासाद्य तत्राधिकारवर्गे तत्रत्यारब्धकर्मकलापे च निर्लिप्तोऽवतिष्ठते, स तत्पदप्रतिष्ठितोऽपि ब्रह्मभूतः, एवमधिकारान् स्वायत्तान् त्यक्त्वा ब्रह्मभूयाय कल्पते। असौ सति शरीरे सगुणं ब्रह्माभिधीयते पदत्यागादनन्तरमसौ स्वरूपनिष्ठो निर्गुणो ब्रह्मभूतो जायते। अस्मिन् स्थले एवंविधैव मुक्तिर्निर्दिश्यते। कालरक्षकत्वान्मनोः पदं सर्वोच्चदेवपदमास्ते, यो हि महान् पुरुषः पदमेतदुपतिष्ठते, स पूर्णज्ञानी स्वरूपस्थितो दिव्यशक्तिसमन्वितो भवति। तस्मात् खल्वेष पुरुषः तत्पदमधिकुर्वाणोऽपि मुक्तः, तत्पदमुज्जिहानोऽपि स्वरूपे विलीयते। इयं मुक्तिरैशकर्मणोपपद्यते। पूर्वोक्तसहजजैवकर्मजन्यमुक्तेर्वर्णनं यत्र कुत्रापि शास्त्रे लभ्यते, परमियमुभयविलक्षणा ऐशकर्मजा मुक्तिस्त्वलौकिकी महत्तमा बोध्या ॥ ४०-४५ ॥

## नानामन्वन्तरेषु नैकविधदेवसंघनिर्माणे हेतुप्रतिपादनम् ।

पुराणप्रतिपादितं सर्वमेव मन्वन्तरीयकथाकदम्बं देवसृष्टिसम्भवं तात्कालिकदेवलोकसम्बद्धञ्च। सर्व एवैष गाथानिवहः पुराणप्रवर्त्तकानामृषीणां समाधिनिर्धूतमलेऽमलेऽन्तःकरणगगनमण्डले स्वतः समुदेति, तदासौ ग्रन्थे विलिख्यते। समाधिरहस्यवेदिनो योगीश्वरा एव इममलौकिकसमाधिगम्यविषयमवगन्तुं प्रभवेयुः, तदन्यः कोऽपि न रहस्यमेवज्ज्ञातुं शक्नुयात्। यथाऽस्मिन् मृत्युलोके नानाकालविभागेषु राजा, प्रजा, राजशक्तिः, प्रजाशक्तिः, देशकालपात्राणां स्वरूपञ्च पृथक् पृथगेव प्राप्यते तथैव प्रतिमन्वन्तरं दैवजागतिकशृङ्खला विविधा परिवर्त्यते। प्रत्येकं मन्वन्तरे पृथक्प्रकारको देवर्षिपितृसङ्घो नैकविधं देवपदमाददानः सृष्टेः समष्टिकर्मपार्थक्यानुरूपमेव तन्मन्वन्तरं व्यवस्थापयति। तस्मात् प्रतिमन्वन्तरं दैवराज्यस्य देवपदानाञ्च शृङ्खलायामवश्यं महान् भेदो भवेत्। अस्मादेव कारणान्मन्वन्तरेषु एवंविधं देवसङ्घपरिवर्त्तनमुपलभ्यते ॥४६-५६॥

## वैवस्वतमन्वन्तराधिपतेर्जन्मादिवैचित्र्यसमाधानम् ।

वैवस्वतमन्वन्तराधिपतेरुत्पत्तिगाथाऽत्यन्तवैलक्षण्यपूर्णा विद्यते। अत्र कस्यापि शङ्कावसरो न भवेत्तदर्थं विविच्यते, यदियं गाथाऽऽध्यात्मिकभावसमन्विता शोभते, रचना किलैतद्गाथायाश्च लौकिकभाषामयी बोध्या। सूर्यादीनां यत्स्वरूपं समाधिगम्यं तस्य बालबुद्धिदुर्बोधतया लौकिकभाषारीत्या प्रकाशनमकरोत्। तथैवाध्यात्मिकभावविभूषितां विधाय गाथामिमामतिमनोहराकारे प्रास्तौत्। इत्थं विचारसरण्यामनुसृतायां तत्त्ववेदिनो विद्वांसः

अस्यां गाथायां माधुर्येण सह गाम्भीर्यमपि ग्रहीतुं शक्नुयुः, तथैव भगवतः सूर्यदेवस्याध्यात्म्यमाधिदैवमाधिभौतं रूपं तदीयसन्तानादिपरिवारवर्गस्य स्वरूपञ्च दार्शनिकदृष्ट्या द्रष्टुं प्रभवेयुः । अध्याय ॥ ७७–७८ ॥

## अशीतितमेऽध्याये पौराणिककथामौलिकत्वप्रतिपत्तौ-कल्पादिकार्यकलापविवेचनम् ।

दैवराज्यस्य कालव्यवस्था कर्मशृङ्खला पदाधिकारिणां सुव्यवस्था च त्रीण्येतानि स्वतन्त्रकार्याणि दैवजगतो व्याख्यातानि । कालव्यवस्थापको राजा मनुरभिधीयते, धर्माधर्ममौलिककर्मशृङ्खलासम्भारको यथावत् कर्मफलभोगदानेन जीवानां नियामको नृपो यमो धर्मराजो वा विद्यते, नानापदधारिदेवताप्रतिष्ठापको देवसत्त्वसुरक्षको देवराज इन्द्र इत्युच्यते । किञ्च, देवसङ्घोऽपि प्रत्येकमन्वन्तरसमष्टिप्रबन्धानुबन्धेन पार्थक्यतो विभज्यते । ज्ञानव्यवस्थापको देवसङ्घ ऋष्यादिरास्ते, आधिभौतिकसृष्टिसुव्यवस्थाविधायको देवसङ्घो नित्यपितृगणादिरवतिष्ठते, चतुर्विधभूतसङ्घस्य जीवानांगमनागमनचक्रस्य च निरन्तरं नियामका नानादेवपदवीपरिपालका अपरे विविधा देवसङ्घाः स्वस्वपदेषु नियुक्ताः सन्तिष्ठन्ते । समाधिसम्प्राप्ता एते देवसङ्घा वैवस्वतमन्वन्तरीया व्याहृताः । प्रत्येकमन्वन्तरकालो मानवीय ३०६७२०००० वर्षात्मको भवति, तथैको ब्राह्मकल्पः ४३२०००००००० एतावन्मानवाब्दिको ज्ञेयः । इत्थं कल्पमन्वन्तरयोर्गणितयोगान्मन्वन्तराणां सन्धिकालीनाः २५९२०००० एतावन्तो वर्षाः पृथगेवावशिष्यन्ते । प्रतिमन्वन्तरमादिमध्यान्तगोचरं सन्धित्रयं मन्यतेस्म, अत्रोदाहृतम्, यदा मनुष्याणामायुः परिसमाप्यते तदा यथावल्लब्धायामपि वर्षपरिगणनायां विविधावान्तरकारणपारवश्येन देहावसानसमये दिनघटिकादीनामवश्यमेवान्तरमुपजायते । एवमेव प्रतियुगमहायुगमन्वन्तरान्तं स्तोकमवशिष्यमाणो भागः कल्पमन्वन्तरयोरायुःपरिमाणे सन्धिकालमुपचिनोति । निश्चितमेतद् यन्मनोः पदे यदैकव्यक्तेः स्थानमपरव्यक्तिरधिकरोति तदैव मन्वन्तरान्तरमुपजायते । साम्प्रतमेतन्मन्वन्तरीय-३०६७२०००० वर्षेषु केवलं १२०५३३०३२ वर्षाणि व्यतीतानि । वर्तमानमन्वन्तरस्य १८६१८६९६७ एतावन्तोऽब्दा अवशिष्यन्ते ।

त्रिकालदर्शिनः पूज्यपादमहर्षिव्यासादयः समाधिधिया एवंविधा मन्वन्तरीयाः कल्पकल्पान्तरीयाश्च गाथाः सङ्कलय्य लोककल्याणकृते पुराणेषु प्रकाशयामासुः । नैताः कथाः कल्पिता अपि तु सर्वथैव सत्याः, किन्तु त्रिभावैः

त्रिभाषाभिश्च समन्विताः सन्ति, नासां लौकिकेतिहासैः कोऽपि सम्बन्धः। किं बहुना, यदा साम्प्रतमपि द्विशतवार्षिके पञ्चशतवार्षिके वा स्वल्पकालीनेऽपि लौकिकेतिहासे देशकालपात्राणां सभ्यतायाश्च कियत्परिवर्त्तनमवलोक्यतेऽस्माभिः, तदा नैकमन्वन्तरीये कल्पकल्पान्तरीये वा विपुले काले सृष्टेस्तदङ्गानां वा स्वरूपे कियत् परिवर्त्तनं सम्भवेत् तत् सुधियः स्वयमेव विचारयन्तु। अस्मादेवार्वाचीनानां लौकिकबुद्धया पुराणगाथाः कल्पिताः प्रतीयन्ते ॥६—११॥

मार्कण्डेयपुराणान्तर्गतसप्तशतीगीतातत्त्वप्रकाशिका प्रस्तावना।

देवि ! प्रपन्नार्तिहरे ! शिवे ! त्वं, वाणीमनोबुद्धिभिरप्रमेया।
यतोऽस्यतो नैव हि कश्चिदीशः, स्तोतुं स्वशब्दैर्भवतीं कदाचित् ॥
त्वं निर्गुणाकारविवर्जिताऽपि, त्वं भावराज्याच्च बहिर्गताऽपि।
सर्वेन्द्रियागोचरतां गताऽपि, त्वेकाह्यखण्डा विभुरद्वयाऽपि ॥
स्वभक्तकल्याणविवर्द्धनाय, धृत्वा स्वरूपं सगुणं हि तेभ्यः।
निःश्रेयसं यच्छसि भावगम्या, त्रिभावरूपे ! भवतीं नमामः ॥
त्वं सच्चिदानन्दमये स्वकीये, ब्रह्मस्वरूपे निजविज्ञभक्तान्।
तथेशरूपे च विधाप्य मातरुपासकान् दर्शनमात्मभक्तान् ॥
निष्कामयज्ञावलिनिष्ठसाधकान्, विराट्स्वरूपे च विधाप्य दर्शनम्।
श्रुतेर्महावाक्यमिदं मनोहरम्, करोष्यहो "तत्त्वमसीति" सार्थकम् ॥

शक्तिशक्तिमतोरभेद एव तात्त्विकः। शक्तिशक्तिमतोः पृथक्सद्भावो यावत्परोक्षाऽपरोक्षानुभूतिभ्यां प्रत्यक्षीक्रियते तावत् शक्तिमतः शक्तेः प्राधान्यमङ्गीकरणीयमेव। एको गायको, यस्मिन् अलौकिकगायनशक्तेर्विकासो वर्तते तद्गायकापेक्षया तदीयगानशक्तेरादर उपयोगो महत्त्वञ्चाधिकं भवेत्। स गायको यदि स्वीयां गानशक्तिं प्रयुञ्जीत तदा तद्दर्शनेनापि तस्य मधुरशब्दमयसृष्टिविलासे जगन्मुह्येत, परन्तु यदासौ स्वशक्तिं स्वस्मिन्नव्यक्तदशां नयेत्तदा केवलं गायकरूपमवलोक्य न कोऽपि मुग्धो भवेत्। तस्मात्पुराणतन्त्रादिशास्त्रेषु शक्तेरुपासनाया विस्तारोपयोगित्वमहत्वादिकमधिकमुपलभ्यते। यथार्थतः सगुणब्रह्मण एवोपासना जायते, यावद्द्वैतसद्भावमुपासनासम्बन्धोऽवतिष्ठते। द्वैतभानं च तावदेव स्थातुमर्हति यावत् सगुणत्वमास्ते। तस्माद् वेदसम्मते सर्वस्मिन् शास्त्रसमुच्चये सगुणोपासनाविस्तारः सातिशयमुपलभ्यते। सगुणोपासनायाः पञ्च भेदा भवन्ति, तत्र विष्णोरुपासना चिद्भावाश्रयकारिणी शिवोपासना सद्भावाश्रयकारिणी सूर्योपासना भगवत्तेज-आश्रयकारिणी धीशोपासना भगवद्भावमयबुद्ध्याश्रयनिष्ठा, भगवच्छक्तिसमाश्रया च शक्तेरुपासना वर्त्तते।

ब्रह्मानन्दविलासोल्लासिन्यां सृष्टिदशायां चित्सत्तेजोबुद्धिशक्तयः पञ्चैता ब्रह्मपदेन सह घनिष्ठं सम्बध्नन्ति। चित्सत्ता जगद्विभावयति, सत्सत्ता जगतोऽस्तित्वमनुभावयति, तेजो विश्वं ब्रह्माभिमुखमाकर्षति, बुद्धिः सदसतोर्ब्रह्मजगतोर्भेदं प्रत्याययति, शक्तिश्च सृष्टिस्थितिलयान् प्रकुर्वाणा जीवान् बध्नाति बन्धनाद्विमुञ्चति च, तदेतत्पञ्चावलम्बनेन सगुणपञ्चोपासनाविज्ञानं निर्णीयते स्म। उपासकः पञ्चदेवोपासनाश्रयेण ब्रह्मसान्निध्यमासाद्य तदन्ते ब्रह्मसायुज्यमुपैति। तस्मादेव पञ्चोपासनानां पञ्च गीताः स्वं स्वमिष्टदेवं जगज्जन्मादिकारणं मत्वा ब्रह्मरूपं निर्दिशन्ति।

अनन्तकोटिब्रह्माण्डमयो दृश्यप्रपञ्चो ब्रह्मशक्तेर्विलास एवास्ति। ब्रह्मशक्तिरेव सृष्टिस्थितिलयान् विदधाति, सैवाऽविद्यास्वरूपा जीवान् पाशबन्धने निगडयति, विद्यारूपिणी च सा ब्रह्मसाक्षात्कारेणैतान् कृतार्थयन्ती तेभ्यो मुक्तिं प्रयच्छति। अपरञ्च, ब्रह्मतच्छक्त्योरहं ममेतिवद् भेदो नास्ति। शक्तिमतः शक्तेः किमाकारकं विशेषत्वमिति गायकं गानशक्तिञ्चोदाहृत्य पूर्वमेव प्रतिपादितम्। तस्या एव ब्रह्मशक्तेश्चत्वारो भेदा वेदशास्त्रैः प्रत्यपादिषत। तथा हि, सर्वदा ब्रह्मलीना शक्तिस्तुरीया भण्यते, सैव तुरीया ब्रह्मशक्तिः स्वरूपप्रकाशिनी विद्यते, ब्रह्मविष्णुमहेशानां जननी निर्गुणं ब्रह्म सगुणं दर्शयन्ती ब्रह्मश्लिष्टा महाशक्तिः कारणशक्तिः कथ्यते, इयमेव कारणशक्तिः कदाचिद् विद्या अविद्या च कदाचन वोभूयते। अत्र ब्रह्मशक्तेः सत्त्वतमःप्रधानयोर्भावयोर्द्विधा पार्थक्यमेव कारणत्वमावहते। सृष्टिकारिणी ब्राह्मी शक्तिः, स्थितिविधायिनी वैष्णवी शक्तिः, लयकारिणी शैवी शक्तिरेव ब्रह्मणस्तृतीयभावमयी शक्तिर्मन्यते, एतास्तिस्रः सूक्ष्मशक्तयोऽभिधीयन्ते, स्थावरसृष्टिर्जङ्गमसृष्टिर्ब्रह्माण्डसृष्टिः पिण्डसृष्टिर्वा भवेत् सर्वत्रैव सृष्टिस्थितिलयक्रमं तदस्तित्वञ्च एता एव सूक्ष्मा ब्रह्मशक्तयः स्फुरन्ति। आसामेव साहाय्येन प्रत्येकब्रह्माण्डाधिनायका ब्रह्मविष्णुमहेश्वराः स्वं स्वं कार्यं सुसम्पादयन्ति। महाशक्तेस्तस्याश्चतुर्थी दशा स्थूलशक्तिः परिकीर्त्यते, पदार्थविद्ययाऽपि स्थूलशक्तिरनुभूयते, अनया स्थूलशक्त्या स्थूलजगद्धारणपरिवर्त्तनादि निखिलं कार्यजातं सम्पद्यते, तडिच्छक्त्यादयोऽस्याः किल नैके भेदाः सन्ति। अस्माद्धेतोः शक्त्युपासनाया विस्तारो महत्त्वञ्च सातिशयमतिरिच्यते।

समष्टिव्यष्टिरूपिणी ब्रह्माण्डपिण्डात्मकसृष्टिर्ब्रह्मशक्तेर्विलास एवास्ते। सा सृष्टिश्चतुर्दशलोकमयी विद्यते। प्रतिब्रह्माण्डं भूर्भुवःस्वरादयः सप्त ऊर्द्ध्वलोका अतलवितलादयः सप्ताधोलोकाश्च वर्त्तन्ते। सप्तोर्द्ध्वलोकेषु

देवा अधोलोकेषु च सप्तस्वसुराः सन्तिष्ठन्ते, एष मृत्युलोको हि सप्तोर्ध्वलोकान्यतमभूलोकस्य चतुर्थांशो विज्ञेयः। अत्रत्या जीवा मातृगर्भात् सम्भवन्ति मृत्युमपि प्राप्नुवन्ति, तस्मादयं लोको मृत्युलोक इत्याख्यां भजते। किञ्च, अन्यत्राखिललोकवर्गे न मातृगर्भतो जन्म जायते, अपि तु मृत्युलोकप्रभवाः प्राणिनो निजकर्मपारवश्यतो मृत्योरनन्तरमातिवाहिकदेहेन तत्र तत्र लोके दैवसाहाय्याद् व्रजन्ति। पिण्डस्त्रिविधो वेद्यः। तत्रोद्भिज्जादियोनिजातानां सहजपिण्डः, मनुष्याणां मानवपिण्डः, दैवपिण्डश्च देवानां गीयते। मृत्युलोकमपहाय अपरे सर्वे लोका दैवलोकाः कथ्यन्ते। तेषु देवपिण्डधारिणो देवा एव निवसन्ति। सहजपिण्डधारिणो मानवपिण्डधारिणो वा जीवा देवपिण्डधारिणो जीवान् न दृष्टिपथमानेतुं प्रभवेयुः, यदि देवानामनुग्रहो भवेत्तदा तान् द्रष्टुं शक्नुयुः। देवलोकोऽस्माकीनपार्थिवलोकादतीतः सूक्ष्मश्च। यथा देवा देवपिण्डं बिभ्रति तथैवासुरा अपि देवपिण्डं दधति। तत्र केवलमेतावानेव भेदो यदात्मोन्मुखवृत्तिप्रधाना देवा असुराः किलेन्द्रियोन्मुखवृत्तिमुख्या भवन्ति। तस्मात् खलु सूक्ष्मे देवलोके प्रायो देवासुरसङ्गरं प्रवर्त्तते। तत्रोन्नताधिकारिणो देवा न कदाचिदसुराणां राज्यमपहर्त्तुमिच्छन्ति, ते तु निजायत्तलोकेष्वेव सर्वथा सन्तुष्यन्ति, परं विषयलोलुपा असुरास्तु सर्वदैव दैवराज्यमात्मसात्कर्त्तुं यतन्ते, एतदेव मौलिकं देवासुरसंग्रामकारणम्। मृत्युलोकेऽपि मानवपिण्डो देवासुरसंग्रामाय दुर्गायते। तं देवा असुराश्च स्वानुरूपाधिकारमानेतुं प्रयतमानाः सन्तिष्ठन्ते। अयमेव मानवपिण्डे पापपुण्यप्रतिष्ठः कुमतिसुमतिजन्यः संग्राम आस्ते। यदा देवासुरसंग्रामेऽसुराणां विजयो जायते तदा ब्रह्मशक्तिमहामायानुकम्पयैव असुराणां पराभवेण सूक्ष्मे दैवराज्ये पुनः शान्तिः स्थाप्यते स्म। अस्योदाहरणं पिण्डेऽप्यवलोकनीयम्। पापिष्ठो मानवो यदा पापपङ्के पतितस्तस्मादुत्थातुमक्षमते तदा गुरोर्दैवस्य वा बलमेव तस्मै साहाय्यं वितरति। एतत् सर्वमखिललोकमातु र्महाशक्तेरनुग्रहस्यैव रूपान्तरमवगन्तव्यम्।

यथा जगदादिकारणं परब्रह्म सच्चिदानन्दैस्त्रिभिर्भावैर्ज्ञायते, भूयो यथा वा पराभक्तावधिकृतो भावुको भक्तगणस्तदीयभावत्रयानुसारतो ब्रह्मेशविराड्रूपेषु स्वस्मिन् शान्तस्वान्तमन्दिरे पृथग्भावैस्तदीयं दर्शनं विदधान आनन्दसागरमवगाहते तथैव सर्वाण्यपि संसारवस्तूनि त्रिभावसम्बलितानि। यथा किल कारणब्रह्मणि त्रयो भावा विद्यन्ते तथैव कार्यब्रह्मापि त्रिभावात्मकम्। तस्माद् वेदः तत्सम्मतशास्त्रसमुच्चयोऽपि त्रिविधैरर्थैः समन्वेति। एतावता

सर्वतन्त्रसिद्धान्तेन नैसर्गिकनियमेन देवासुरसंग्रामस्वरूपमपि त्रिविधं बोध्यम् । तदीयमाध्यात्मस्वरूपं प्रतिपिण्डं क्लिष्टाक्लिष्टवृत्तीनां मिथो युद्धम् प्रकाशयति, आधिदैवञ्च सूक्ष्मदैवराज्ये देवासुरराजसैन्यानां परस्परं जन्यमेवाचष्टे, तदीयमधिभूतस्वरूपमस्मिन् मृत्युलोके सामाजिकै राजनैतिकैश्च युद्धैः प्रख्याप्यते ।

सप्तशतीगीताप्रकरणं पूर्वोक्तदार्शनिकविज्ञानबहुलं विद्यते, यज्ज्ञात्वा दर्शननिष्णातबुद्धयो भक्ता आनन्दविह्वला भवन्ति । अन्याः सर्वाः प्रचलिताः गीतोपनिषदः प्रायशो ज्ञानप्रधाना वर्त्तन्ते, सर्वाश्चैता ज्ञानकाण्डविस्तारतत्पराः परिदृश्यन्ते । परमस्याः सप्तशतीगीतायाः महत्त्वं ताभ्योऽतिरिच्यते यस्मादियं प्रथममुपासनायां परमं साहाय्यं प्रयच्छति, कलौ कर्मकाण्डे च प्रधानमङ्गमुपजायते । द्वितीयतः, इयं सप्तशतीगीता कलौ जीवानां सकलमनोरथसिद्धये कल्पतरुरेवास्ति । ये शब्दाः शब्दसमूहा वा दैवराज्येन सह सम्बध्नन्ति, यत्प्रभावो वा दैवराज्यमनुबध्नाति, ते मन्त्रा अभिधीयन्ते । कलौ सप्तशतीगीता वैदिकमन्त्रेभ्योऽपि विशेषशक्तिशालिनी समाम्नायते । धर्मार्थकाममोक्षफलप्रदायिन्याः सप्तशतीगीतायास्तृतीयं महत्त्वमत्यन्तं विलक्षणं विद्यते । तथा हि, अहं ममेतिवत् शक्तिशक्तिमतोरभेद एवास्ति, इति पूर्वमेव व्याख्यातम्, सोदाहरणमेतच्च प्रथममेव प्रमाणितम्, यत्सृष्टौ शक्तिमतः शक्तेरादरो महत्त्वञ्चाधिकमास्ते । उपासनायामेतदुभयविमर्शानुबन्धेनैव भगवत्सान्निध्यलब्धये पद्धतिर्निर्धारिता, कुत्रापि शक्तिमतो मुख्यत्वमङ्गीकृत्य तच्छक्त्याश्रयेण उपासनायाः साधनशैली समाम्नायि, एवमपरत्र कुत्रापि शक्तेरेव प्राधान्यं मत्वा शक्तिमदनुमानविधाना उपासनाप्रणाली प्रत्यपादि । तत्र प्रथमदशायां वेदशास्त्रविहितनिर्गुणसगुणोपासनायाः सर्वे भेदाः समुदाहृताः । द्वितीयदशायां त्वपेक्षाकृतात्मज्ञानरहितायां केवलमनुमानेन ईश्वरसद्भावं स्वीकृत्य तदीयनानागुणगणचिन्तनेन विविधधर्ममतमतान्तरपथानुयायिनो भक्तोपासकाः सर्वहितकारिणं भगवन्तं तत्प्रत्ययेनैसरन्तः कृतार्था जायन्ते । प्रथमप्रणाल्यामात्मज्ञानसद्भावेन भगवत्स्वरूपप्रकाशो भागवतमनोमन्दिरे यथावदवतिष्ठते, द्वितीयायां तु आत्मज्ञानविकाशराहित्येन भक्तः केवलं भगवतो मनोमोहकशक्तिसमूहावलम्बनादवाङ्मनसगोचरं परमात्मानमात्ममनोमन्दिरे प्रतिष्ठापयितुं प्रयतते । मातृभावेन श्रीभगवदुपासनाकृते या नानावैचित्र्यपूर्णा शक्तेरुपासनाप्रणाली परिचालिता सा किलोभाभ्यां पूर्वोक्तप्रणालीभ्यां विलक्षणैव बोध्या । अत्रोपासनाविज्ञाने शक्तिशक्तिमतोरभेदलक्ष्यं सर्वदैव स्थिरीकृतम् । श्रीभग-

वानेव शक्तिरूपेण उपास्योपासकसम्बन्धं स्थापयति, पुनरेष एव शक्तिमद्रूपेण शक्तिभावापन्नं भक्तं स्वस्मिन् सम्मेल्य मुक्तं विदधाति। एतदेव तृतीयाया अनुपमोपासनाप्रणाल्या मधुरं गूढ़रहस्यम्।

सप्तशतीगीता शक्तेरुपासनामार्गस्य परमप्रयोजकः सातिशयसहायकः तत्प्रधानप्रवर्त्तकश्च उपनिषद्ग्रन्थो ज्ञातव्यः। अस्या उपनिषदो गाथाप्रसङ्गः विविधप्रकारतो वेदेषु वेदसम्मतशास्त्रेषु च समुपलभ्यते। सप्तशतीगीताप्रक्रमः पुराणेष्वित्थं प्राप्यते—पुराकाले भगवद्-व्यासशिष्यो महर्षिर्जैमिनिः सर्ववेद-वेदाङ्गशास्त्रपारङ्गतोऽपि श्रीमहाभारतस्य विविधस्थलेषु नानादुर्बोध्यविषयान् नैव विज्ञातुं प्राभवत्, तदा तदीयगुरोरवकाशाभावात् परमविज्ञमहर्षिं मार्क-ण्डेयमुपेत्य नैकरहस्यजिज्ञासां कृतवान्। ततो महर्षिर्मार्कण्डेयस्तमादिष्टवान्, साम्प्रतं मया सन्ध्यावन्दनादिनिमित्तं गम्यते ततो नास्ते ममावकाशः। भवता पितृशापग्रस्तानां पक्षिरूपाणि बिभ्रतां पिङ्गाक्ष-विरोध-सुपुत्र-सुमुखनामधे-यानां सर्वशास्त्रविशारदानां चतुर्णां मुनिपुत्राणां सन्निधानमेत्य एते प्रश्ना जिज्ञा-सितव्याः। त्वरितमेव सर्वे भवदीयसंशया निवर्तिष्यन्ते, इत्थं महर्षिर्जैमिनि-र्गुरुकृपामासाद्य तेषां पक्षिशरीरधारिणां महात्मनां समीपमुपेत्य जिज्ञासया-मास। तदा मार्कण्डेयः क्रोष्टुकिसंवादमुपक्रम्य विविधशङ्काः समादधानो महर्षिजैमिनिं सन्तोषयाम्बभूव। यथाक्रमं चतुर्दशमन्वन्तरकथाप्रसङ्गे तेनो-क्तम्, सुरथो नाम राजा ब्रह्मरूपिण्या भगवत्या अनुग्रहाद् अष्टममन्वन्तरा-धिपतिः सावर्णिर्भविता मनुरिति। भविष्यन् सावर्णिनायको मनुर्यदा सामान्यो नृप आसीत् तदा कथं तेन ब्रह्ममय्या जगदम्बायाः कृपा समासा-दिता तत्प्रसङ्गं जगत्कल्याणवासनापारवश्येन महर्षिरात्मज्ञानी मार्कण्डेयः पूर्वमेव क्रौष्टुकिमुपदिष्टवान्, परं जैमिनिप्रश्नावसरेऽवकाशाभावादसौ पक्षि-शरीरधारिणां मुनीनामन्तिके महर्षिं जैमिनिं प्रेषितवान्। संवादः मार्कण्डेय उवाच इति वचनेन प्रारभ्यते स्म, यः किल त्रिलोकपावनः, त्रिलोकीरक्षकः, सर्वकामफलप्रदः, सर्वजीवहितकरश्च विद्यते।

## मन्वन्तरकालनिर्णयो मनुनामनिर्देशश्च।

पुराणशास्त्रं वेदानां भाष्यं भणितम्। यथा वेदाः त्रिकालज्ञास्तथा पुराणशास्त्रमपि त्रैकालिकविषयानभिव्यनक्ति। तस्मादसौ सावर्णिमन्वन्त-रीया गाथा पुराणेषु प्रकटिता। कलाविषये शक्तिरहस्यादौ लिखितं यथा—

"चतुर्युगसहस्राणि, ब्रह्मणो दिनमुच्यते।
पितामहसहस्राणि विष्णोरेका घटी मता॥ १॥

विष्णोर्द्वादशलक्षाणि, निमेषादूर्ध्वं महेशितुः।
दशकोट्यो महेशानां श्रीमातुस्त्रुटिरूपकाः॥ २॥

शतत्रुटीनामेकं परम्, त्रिंशत्परणामेको निमेषः, अष्टादशनिमेषाणामेका काष्ठा, विंशतिकाष्ठानामेका कला, त्रिंशत्कलानामेका घटिका, घटिकाद्वयस्यैकं क्षणम्, त्रिंशत्क्षणानामेकमहोरात्रम् भवति।

अनादिरनन्तो महाकालो विविधप्रकारैर्विभज्यते, यथा-मन्वन्तराद्भगवतो ब्रह्मणो दिनं तदीयायुःकालश्च समधिकमास्ते तथैव ब्रह्मणो दिनायुर्भ्यां विष्णोर्दिनायुषी नितान्तमधिकायेते। इत्थमेव भगवतो विष्णोर्दिनायुरपेक्षया भगवतः शिवस्य दिनायुःप्रमाणमधिकाधिकमवगन्तव्यम्।' यतोऽसौ ब्राह्मण्डप्रलयकारी विद्यते, तदीयमायुर्यावद् ब्रह्माण्डसत्ताऽवतिष्ठते। एकस्मिन् ब्राह्मे दिने चतुर्दशमन्वन्तराणि भवन्ति। भगवान् मनुः कालनियामको देवः। यथा-वसुरुद्रादित्येन्द्रादीनि सूक्ष्मदैवराज्यपदानि तथैव मनोरपि स्थायिपदं वरीवर्त्ति। तत्र केवलं पदधारिणः परिवर्त्त्यन्ते। अष्टमे मन्वन्तरे मनोः पदेऽभिषेक्ष्यमाणदेवस्य पूर्वजन्मवृत्तान्तोऽत्र वर्ण्यते स्म। चतुर्दशमनुनामानि यथा, स्वायम्भुवः, स्वारोचिषः, उत्तमः, तामसः, रैवतः, चाक्षुषः, वैवस्वतः, सावर्णिः, दक्षसावर्णिः, ब्रह्मसावर्णिः, धर्मसावर्णिः, रुद्रसावर्णिः, देवसावर्णिः, इन्द्रसावर्णिश्च। कालधर्मं पालयितुं सदा तत्परो मनुरास्ते। मनोरधिकारः सातिशयं महान् महीयते॥ २॥

## वैदिकादिवर्णनभेदनिरूपणम्।

वैदिकी पौराणिकी च वर्णनपद्धतिः त्रिविधा प्रशस्यते। तन्नामानि यथा-समाधिभाषा, लौकिकी भाषा, परकीयभाषा च। एतासां त्रिविधभाषाणां ज्ञानमन्तरेण न कोऽपि पौराणिकं गूढ़रहस्यमवगन्तुं प्रभवेयुः। समाधिबोध्यविषयाः समाधिभाषया समीर्यन्ते, यथाऽऽत्मप्रकृतिकर्मस्वरूपाणि धर्माधर्मनिर्णयप्रभृतयश्च। यदा किल लौकिकरीत्या समाधिगम्याध्यात्माधिदैवरहस्यानि रूपकालङ्कारे वर्णयित्वा श्रोतृवृन्दबुद्धयः सत्ये प्रतिष्ठाप्यन्ते तदा तां लौकिकीं भाषामाहुः, यथा जगदम्बाजन्मकर्मविवाहविलासादिवृत्तान्तो यो यथार्थतः समाधिगम्योऽलौकिकविषयो वरिवर्त्ति, परञ्च मध्यमाधिकारिणां कृते विषयोऽयं लौकिकदिशा वर्णितः। तृतीया परकीया भाषा भण्यते, या समाधिलौकिकभाषागोचरान् विषयान् द्रढ़यितुं युगयुगान्तरीया कल्पकल्पान्तरीया वा घटनावली गाथारूपेण प्रकाश्यते, तदेव परमार्थतः परकीयभाषावर्णनमास्ते, नेदं लौकिकेतिहासंवर्णनं निश्चयनीयम्। वेदशास्त्रिकालदर्शिनो मह-

र्षयो योगयुक्तात्मबुद्ध्या यथा समाधिभाषां समुदभावयन् तथैव लौकिकीं परकीयाञ्च भाषां पुराणेषु प्रकाशयामासुः । नैष गाथाव्रजो लौकिककथाकदम्बं लौकिकेतिहाससमूहो वा विद्यते, सर्वमेतत्समाधिबोध्यं कर्मरहस्यमवधार्यताम् ॥ ३ ॥

### तपोवनस्य प्रधानलक्षणमाह ।

तपोवनस्य द्वे एव प्रधानलक्षणे भवतः । यत्र निर्वैरो वासः पशूनां, समाहितमनसां मुनीनां निवासश्च, तदेवास्ते तपोवनम् । योगशास्त्रमेतन्निश्चिनोति-यत्र वैरभावरहितान्तःकरणा अहिंसाभावपरायणा महात्मानो निवसन्ति तत्र हिंस्रा अपि जन्तवो हिंसावृत्तिं विहाय निर्भया विचरन्ति, किञ्च त एव मुनयो व्याह्रियन्ते यन्मनांसि निरन्तरं भगवल्लीनान्यवतिष्ठन्ते, यत्रैवंविधानां महात्मनां निवासो भवेत् यत्र हिंसका अपि पशवो हिंसाभावं परित्यजन्ति, तदेव स्थानं तपोवनाख्यां भजते, सदैतत् साधकैः स्मर्त्तव्यमेव ॥ १० ॥

### एकाशीतितमेऽध्याये पञ्चमहायज्ञमहत्त्वप्रतिपादनम् ।

मनुष्याणामभ्युदयनिःश्रेयसप्रतिपादकं यावद्धार्मिककृत्यजातं यज्ञो व्यपदिश्यते । निखिलजगत्कल्याणसाधको धर्मस्तु महायज्ञोऽभिधीयते । गृहस्थानां कृते प्राधान्येन पञ्च महायज्ञा निर्दिष्टाः, यथा नित्य-ऋषि-सम्वर्द्धनाय ब्रह्मयज्ञो देवसम्वर्द्धनाय देवयज्ञो नित्यनैमित्तिकपितृसम्वर्द्धनाय पितृयज्ञः, जीवमात्रतृप्तये भूतयज्ञः मनुष्यमात्रतृप्तये च नृयज्ञोऽभिहितः, अतिथिसत्कारसाधनया नृयज्ञः।साध्यते तस्मादेतावानस्य महिमा । गृहागतमानवमात्रस्यातिश्रद्धया सत्कारो नृयज्ञो ज्ञेयः ॥ ११ ॥

### युगपद्द्विजाधिकारनिर्देशः ।

प्रवृत्तिरोधको वर्णधर्मं आश्रमधर्मो निवृत्तिपोषकश्च । वर्णचतुष्टये ब्राह्मणक्षत्रियवैश्या द्विजाः परिगण्यन्ते, एषां वेदे वैदिककर्मणि चाधिकारो विद्यते । ब्राह्मणं क्षत्रियं वैश्यमेतद्व्यक्तित्रयमित्थं कर्मविपाकपारवश्यादेकत्र युगपदानीय कर्मनियामिका जगत्पालिका श्रीजगदम्बिका त्रयाणामधिकारं क्षत्रियवैश्ययोः कथंकारं भयमोहसञ्चारो जायत इत्यादिकञ्च परिदर्शयन्ती अधिकारनिर्णयार्थमेनं समाधिगम्यप्रसङ्गं दर्शयामास ॥ ३४ ॥

### मुनेरुपदेशस्योद्देश्यमाह ।

अहङ्कारजनिता ज्ञानाभिमानवृत्तिरासुरी प्रोच्यते । तया सह यथार्थतत्त्वज्ञानस्य कियदान्तर्यमिति मुनिर्निजोपदेशेन विशदमदर्शयत् ॥ ४४ ॥

## त्रिगुणमय्या ब्रह्मशक्तेस्त्रिविधभेदनिरूपणम्।

त्रिगुणमयी ब्रह्मशक्तिः स्वतमोगुणप्रभावादविद्यारूपधारिणी जीवान् बन्धनदशां नयति, पुनरियमेव सत्त्वगुणमयी विद्यास्वरूपमादधाना जीवान् मुक्तिपदं प्रतिष्ठापयति। अथासौ कारणशक्तिरूपिणी भूत्वा ब्रह्मविष्णुमहेशात्मकान् त्रिदेवान् प्रतिब्रह्माण्डं सृष्टिस्थितिलयसम्पादनाय प्रसूते ॥ ५२ ॥

## ब्रह्मशक्तिमाहात्म्यप्रदर्शनम्।

ब्रह्ममयी ब्रह्मशक्तिः किंविधा? कथं सा स्थूलं सूक्ष्मं तुरीयञ्च रूपमाश्रयते? किञ्च तेषां तावद् विज्ञानं विद्यते? एतत् सर्वं पूर्वमेव सम्यक् प्रतिपादितमभूत्। सर्वोऽयं तस्या नित्यलीलामयो भावः। तन्नैमित्तिकं रूपं जगतो भक्तानाञ्च कल्याणाभिवृद्धये सूक्ष्मे स्थूले च जगति किमपि निमित्तमवलम्ब्य यथाकालमाविर्भवति। अत्रैव सप्तशतीगीतायामुभयोरुदाहरणमुपलभ्यते। भक्तनिमित्तमाविर्भावो यथा—राज्ञःसुरथस्य समाधिनाम्नो वैश्यस्य च कृते प्रादुरभूत्। एवं जगत्कल्याणार्थं प्रादुर्भावो यथा-प्रधानचरित्रत्रये प्रदर्शितः, येन तुन्दिलेयमास्ते सप्तशतीगीता। किञ्च, एतदेव रूपत्रयं देवलोके प्रथमं मधुकैटभवधाय, द्वितीयं महिषासुरनिधनाय, तृतीयञ्च रूपं शुम्भनिशुम्भविनाशाय यथाकालमाविरभवत्। अवाङ्मनसगोचरी सर्वव्यापिका निर्गुणाऽपि ब्रह्मशक्तिर्भक्तकल्याणविधित्सया सामष्टिकं जगत्कल्याणं वा वितनितुं दिव्यालौकिकरूपे समाविरास्ते स्म। सर्वशक्तिमय्या किं नामाशक्यं भवेत्, न तस्याः कोऽप्यसम्भवः ॥ ५७ ॥

## समासतः सृष्टिविज्ञानवर्णनम्।

सृष्टेश्चत्वारो भेदा भवन्ति। तत्र प्रथमो, यदाऽद्वितीयनिर्गुणब्रह्मदशातो जायमानसगुणभावसम्वलितब्रह्मणो ब्रह्माण्डगोलकमुत्पद्यते असौ हिरण्यगर्भसृष्टिर्निगद्यते। द्वितीयो भेदो यदा पिण्डसृष्टिः प्रारभ्यते, यत्कारणं पितामहो भगवान् ब्रह्मा वर्त्तते, सा ब्राह्मी सृष्टिरभिधीयते। तृतीयो भेदो यदा दशप्रजापतिसङ्कल्पाज्ज्ञानावैचित्र्यमयी सृष्टिरुपजायते, एषा मानसी सृष्टिर्मन्यते, इत्थं हि प्रतिक्षणं स्त्रीपुरुषसम्बन्धाज्जायमाना सृष्टिर्मैथुनी सृष्टिः प्रोच्यते, अयमेव चतुर्थो भेदः। प्रकृतोऽयं विषयो ब्राह्मसृष्टिसमयं सम्बध्नाति। एकब्रह्माण्डोत्पादकः समष्टिसंस्कारपुञ्ज एव जगदेकार्णवीभावः। एष एव यत्रकुत्रापि शास्त्रे कारणवारिशब्दतो व्यपदिश्यते स्म। तत्रानन्तशय्यावर्णनमनन्तमहाकाशमभिलक्षयति। आकाशतत्त्वात्परो ज्ञानस्वरूप आत्माऽनुभूयते।

अयमेव "तद्विष्णोः परमं पदम्" इत्यादिश्रुतिप्रतिपाद्यो भावः । तदवस्था-प्रत्यायकः सत्त्वगुणस्तदधिदेवो विष्णुरास्ते । एतदेव भगवतः श्रीविष्णोरा-ध्यात्मिकमाधिदैवञ्च रूपं वैज्ञानिकमस्ति । समाधिबोध्याः सर्वे विषयाः त्रिभावात्मकाः समुल्लसन्ति । तस्माद् वेदानां वेदसम्मतशास्त्राणाञ्च सर्वा-ण्येव वर्णनानि त्रिविधान् अर्थान् बोधयन्ति । तन्नियमानुबन्धेन सर्वे वैदिक-मन्त्रा भगवद्गीतासप्तशतीगीतादिशास्त्राणि च त्रिभिरध्यात्माधिदैवाधिभूतभावैः परिपूर्णानि सन्ति । तथा हि भगवतः श्रीविष्णोरध्यात्मरूपं सर्वव्यापकमहा-काशात् परतरं चिन्मयं स्वरूपं विद्यते, यथोपरिष्टाद्वर्णितम् । सत्त्वगुणं यावद् व्याप्नुवन्नधिदैवभाव एव तस्याधिदैवं स्वरूपं स्मर्यते । शास्त्रविहितं ध्यान-मयं यद्रूपं भक्तानां लोचनगोचरमुपजायते तत् तस्याधिभौतिकं स्वरूपं प्रति-भाति । कैश्चनाध्यात्मरूपमेव वर्ण्यते नातस्तदन्यत् स्वरूपद्वयं व्याहन्यते, किञ्च, तद्रूपत्रयमेव सत्यमूलकमास्ते । ब्राह्मयाः सृष्टेः प्रारम्भावसरे रजःप्राधा-न्यात् केवलं ब्रह्मैव जागर्त्ति, यतोऽयं देवो रजोगुणमधिष्ठाय सन्तिष्ठते । तस्मिन् समये यदा कदाचिद् भगवान् विष्णुर्योगनिद्रया निद्रातुमपि शक्नुयात्, यतो रजोगुणमुख्यत्वे सत्त्वगुणो गौणायते । चिदाकाशावच्छिन्नैकब्रह्माण्डस्यान्तः करणसमष्टिरेव भगवद्ब्रह्मणोऽध्यात्मस्वरूपं विभ्राजते, ततो ह्यन्तःकरण-समष्टिबोध्यमाना मनोबुद्ध्यहङ्कारचित्ताभिधानाश्चत्वारो भागा एव ब्रह्म-णश्चतुर्मुखत्वेन पुराणेषु प्रतिपाद्यन्ते । यावद्रजोगुणाभिमानिदेवत्वमेव तदीयाधिदैवस्वरूपं शोभते । सनातनधर्मीय-दार्शनिकसिद्धान्तानुमत्या सम-ष्टिकर्मविभागा दैवं साहाय्यमृते नैव स्रष्टुं शक्नुयुः । अनया विज्ञान-सरण्या स्थावरं नदीपर्वतादिकं उद्भिज्जादिजङ्गमञ्च यावत् जैवसहज-पिण्डपरिचालका विविधा देवा आम्नायन्ते । तस्माच्छास्त्रसमुच्चये देवत्रयतः त्रयस्त्रिंशत्कोटिदेवानां वर्णनमुपलभ्यते । यस्मिन् स्वरूपे भक्तेभ्यो दर्शनं ददाति ब्रह्मलोकञ्च प्रतितिष्ठति तदेव भगवतो ब्रह्मदेवस्याधिभौतिकं रूपं निरूप्यते । भगवान् ब्रह्मा नूनं समाधियुक्तः सन् संसारसृष्टिकार्यं सम्पाद-यति, तत्समाधियोगस्य द्वौ शत्रू वर्त्तेते । तयोः प्रथमः, सृष्टेराद्यदशायामे-कमात्रनादे आनन्दविमूढतया तमोगुणाभ्युपगमः । अनेनैव योगान्तरायेण जड़समाधेः समुद्भवो योगशास्त्रेणानुमोद्यते, अयं जडसमाधिस्तमोगुणाज्जा-यते योगविघ्नकारकश्च बोभूयते । एतदेव मधुनाम्नोऽसुरस्याध्यात्मरूपम् । अयं नादगोचरोऽन्तर्मुखीनो भावः । द्वितीया दशा तु कैटभस्य बोध्या, सा किल नादाद्बहिर्मुखभावेन लब्धाच्युतिः निर्विकल्पभावमुत्सृज्य सविकल्पभाव-

समासदनञ्च विद्यते । इयमेतत् तमःपरिणाममुत्पादयति समाधिभङ्गञ्च विधत्ते । उभावपि मधुकैटभौ नादाश्रयात् प्रादुर्भवतः, नादश्च शब्दाकाशाभ्यां सम्बध्यते । एतदेव भगवतो विष्णोः कर्णमलान्मधुकैटभोत्पत्तेर्वैज्ञानिकं रहस्यं ज्ञेयम् ।

उभयोर्योगविघ्नविधायकवृत्त्योरसुरौ अधिष्ठातारौ अवश्यमासाते, ते एव मधुकैटभयोरधिदैवरूपे वेदितव्ये, ते च परमोन्नता योगिनोऽनुभवन्ति । किञ्च, पुराणान्तरे प्रतिपादितम्—यदा भगवान् विष्णुर्मधुकैटभनामकमसुरद्वयं जघान तदा तदीयशवमेदपरिणामेन पृथिवी समजनि, तस्माद्धेतोः पृथ्वी मेदिनीति संज्ञां लेभे । इत्थं तदीयाधिभूतरूपविज्ञानरहस्यमवधारणीयम् । सृष्टिदशायां प्रकृतविघ्ने विनाशमुपगते यदैकाद्वितीयसाम्यावस्थागतो नादो वैषम्यावस्थामागात्तदाऽऽदौ शब्दमयी वेदादिसृष्टिस्ततो यावत्पार्थिवसृष्टिरभूत् । विघ्ने दूरीभूते भगवान् ब्रह्मा स्वकर्त्तव्यकर्मणि साफल्यमासादितवान् । सर्वशक्तिमय्या महामायाया अनुकम्पां विना भगवतो विष्णोर्योगनिद्राभङ्गोऽशक्य आसीत्, ज्ञानस्वरूपिणो भगवतो विष्णोः साहाय्यमन्तरा च ब्रह्मदेवस्य समाधिविघ्नापनोदनमशक्यमासीत् । जगज्जननी ब्रह्ममयी महामाया अविद्यारूपतो बुद्धिमावृणोति सैव पुनर्विद्यारूपमादधाना तदावरणमपनोद्य जीवान् प्रकृतिस्थान् मुक्तानपि विधत्ते ॥ ६० ॥

## महाशब्दमीमांसा ।

सर्वत्रैव स्थले समष्टिवाचकमहाशब्दप्रयोगः । दैवी आसुरी च शक्तिः शक्तिमत्त्वेन समाना समाम्नायते, तस्मादुभयोर्नामधेयमत्र प्रयुक्तम् । ततो नास्त्यत्र संशयावसरः ॥ ७२ ॥

## महाशक्तेर्विभूतिवैभवविश्लेषणम् ।

प्रलयसन्धिर्मृत्युसन्धिर्निद्रासन्धिरेतत् सन्धित्रयं ब्रह्ममयमहाशक्तेः शक्तिमत्त्वेन प्रबला विभूतिः परिगण्यते । आपामरमुच्चतमव्यक्तयोऽपि समानभावेन तदायत्ता भवन्ति ॥ ७३ ॥

## नवायुधानामभयमुद्रायाश्च विज्ञानवर्णनम् ।

नवायुधानां वर्णनं शक्तिपूर्णताद्योतकं विद्यते । यतो रक्षाकार्ये शक्तेः पूर्णतायाः प्रयोजनमस्त्येव, तत्राप्यभयमुद्राया नैसर्गिकत्वेन दशमहस्तेऽभयमुद्राधारणमुपन्यस्तमिति सुधियो विभावयन्तु ॥ ७६ ॥

## सौम्यशब्दार्थविवेचनम् ।

सौम्यशब्दार्थो भवत्यानन्दप्रदः शान्तिप्रदोऽमृतप्रदश्च । वस्तुतो यद्-

१५

सौन्दर्यं ब्रह्मानन्दप्रदं स्थिरशान्तिप्रदं भवेत् मोक्षाभिमुखञ्च कुर्यात्तदेव सौन्दर्य त्रिभिः सौम्यादिपदैरेभिरुपलक्ष्यते। अस्य भावस्य श्रेणीत्रयविभाजनकरण-तात्पर्यमतिरहस्यपूर्णम्। यतो हि समाधिभाषायाः सर्वे शब्दा त्रिविधार्थ-बोधका भवन्तीत्यत्र नास्ति संशयावसरः। जगदम्बाया आधिभौताधि-दैवाध्यात्मस्वरूपाणां सौन्दर्यं यथाक्रमं अत्युन्नतं विद्यते। एतत् त्रयमेव इमानि-पदानि लक्षयन्ति ॥ ७७ ॥

### ब्रह्मादीनां रात्रिशक्त्योर्विवेचनम्।

यथा वेदादिशास्त्रे ब्रह्मविष्णुमहेश्वराणामायुःसङ्केतो निर्दिष्टः, तथैव तद्रात्रिवर्णनमपि पार्थक्येन प्राप्यते। एवं किल, ब्रह्मणि ब्राह्मी शक्तिः, विष्णौ वैष्णवी शक्तिः, शिवे शैवी शक्तिश्च या काचिदस्ति सा तस्या एव महाशक्तेरंश आस्ते ॥ ७९-८० ॥

### निद्रायाः प्रभुत्वं दर्शयति।

त्रिगुणमय्या महाशक्तेः त्रय एव गुणाः स्वाधिकारानुयोगात् पूर्णशक्ति-विशिष्टा विद्यन्ते। अत्रेयं स्तुतिर्ब्रह्ममय्याः तामसीं महाशक्तिमभिलक्ष्य विहिता। यस्याः प्रत्यक्षं विभूतिर्निद्रा वर्त्तते, या खलु स्थावरजङ्गमादिसृष्टिमारभ्य ब्रह्मा-दित्रिमूर्तिं यावत् स्ववशं नयते ॥ ८४ ॥

### द्वाशीतितमेऽध्याये देवासुरसंग्राममौलिकत्वमवगन्तुं सूक्ष्मलोकानां स्थितिशासनयोः क्रमनिर्देशः।

देवासुरसङ्गरस्याधिदैवरहस्यं विज्ञातुं सूक्ष्मलोकानां शृङ्खला तत्रत्या शासनप्रणाली च नूनमवगन्तव्या। तथा हि, सप्तोद्र्ध्वलोकानां भूलो-कस्य तदवान्तरलोकचतुष्टयस्य च शासको धर्मराजो यमो विद्यते,यस्य राज-धानी पितृलोकमलङ्करोति, अस्मिन् मृत्युलोकेऽपि सम्बन्धस्तस्य बाहुल्येन वर्त्तते। देवेन्द्रराजधानी तृतीये स्वर्गे लोके विराजते। एतावन्तं यावल्लोकमसुरा गन्तु-मर्हन्ति। तत ऊद्र्ध्वमेकद्विलोकपर्यन्तमिन्द्रस्याधिपत्यं सम्भवति, परं तदुप-रिष्टाल्लोकेषु नास्ति तस्यापि कश्चित् सम्बन्धः। यतोऽस्मिन् मृत्युलोके यथा ज्ञानवति तपस्विनि वा व्यक्तिविशेषे न भवति प्रयोजनं राजानुशासनस्य, तथै-वात्यन्तमूद्र्ध्वलोकेषु देवेन्द्रशासनमनावश्यकं जायते। षष्ठ उपासनालोकः सप्तमश्च ज्ञानमयो लोकः, एतल्लोकद्वयं देवानामपि दुर्लभम्। असुरराज-स्याधिपत्यं सर्वेषु निम्नलोकेष्ववतिष्ठते। यस्मादासुरी प्रजा विषयलोलुपा इन्द्रियपरायणा बोभूयते तस्मात्तत्रत्याखिललोकेषु राजानुशासनं नितान्तमा-

वश्यकमुपजायते। देवाः स्वाधिकारैरेवाप्यायन्ते यतस्ते सत्त्वगुणमवलम्बन्ते, असुरास्तु सदैव देवाधिकारमात्मसात्कर्त्तुं नितान्तं व्यग्रा भवन्ति। एतदेव कारणं यन्मृत्युलोकेऽपि दैव्या आसुर्याश्च शक्तेः परस्परं सदा सङ्घर्षोऽक्षिगोचरतामापद्यते। यदा कदाचिदसुरराज इन्द्रदेवाधिकारसीमानमधिकरोति तदा युद्धमिदमुत्कटमुपजायते। तपःक्षयाद्देवराजः कदाचन पराजितोऽपि जायते, स्वराजधानीमुत्सृज्य स्वर्गात्समुन्नतलोकान् शरणार्थमुपगच्छति च। यस्मिन् कल्पे महिषासुरोऽसुरराजो बभूव, तदानीन्तना समाधिसम्प्राप्तेयं गाथा वर्त्तते ॥ ४ ॥

## तत्रैव चक्ररहस्यविज्ञानवर्णनम्।

एतच्चक्ररहस्यं प्रणिधेयम्। तन्त्रादिशास्त्रसमुच्चये यदुपासनाचक्रवर्णनं विद्यते, तत्सर्वमेतदलौकिकविज्ञानावलम्बनेनैव व्यधायि। समवेतो भक्तवृन्दो यदैकस्मिन्नेव देशे काले च युगपदुपस्थाय अनन्यया भक्त्या, एकयैव धारणया, एकेनैव ध्यानेन संयुज्यमानः समाधौ सन्तिष्ठते तदोपासनाशास्त्रे तच्चक्रमाचष्टे। सिद्धे चक्रे तत्र ध्यायमानो देवो नूनमाविर्भवति, यथाऽत्र देवानां ब्रह्मचक्रे भगवती महाशक्तिराविर्बभूव ॥ १३ ॥

## रजोगुणमय्या महाशक्ते रूपविलासादेर्वर्णनम्।

प्रथमचरित्रे यथारूपं ब्रह्ममयी तमोमयी महाशक्तिर्वर्णिता। साम्प्रतमेतच्चरित्रोपाख्यानेन तस्या अनन्तकोटिब्रह्माण्डप्रसविन्या विश्वजनन्या रजोगुणमय्या महाशक्ते रूपविलासादयो वर्ण्यन्ते स्म। जगदम्बाया यन्नित्यस्थितमध्यात्मरूपं तस्य किमपि दिग्दर्शनं पूर्वमायातम्। सा शक्त्यात्मिका प्रत्यक्षं ब्रह्मरूपा ब्रह्ममयी निखिलब्रह्माण्ड-सृष्टिस्थितिलयकारिणी निर्गुणा वाङ्मनाबुद्धिभिरप्रमेयाऽपि भक्तकल्याणवृद्धये कथङ्कारमाकारमाधत्ते, तदीयमाधिदैवञ्च रूपं विश्वमङ्गलाय कथमाविर्भवति, कया च दिशा भक्तमनोमन्दिरविहरणशीलाऽपि सा समवेतभक्तवृन्ददुःखविमोचनाय प्रादुर्भवतीति, कथञ्च तस्याः स्थूलमाधिदैवं शरीरं देवानां समवेततेजोराशिभिर्निर्मीयेत, देवानां समस्तमायुधजातमादधाना किंविधञ्च रूपं बिभ्राणा प्रबलमसुरराजं पराभूय सूक्ष्मे दैवराज्ये शान्तिसाम्राज्यं वितनुते, तत्संक्षिप्तरहस्यं किञ्चिदत्र समाधिगम्यगाथायां प्रकाशितम्। देवतानामधिभूतबलसमूहो दैत्यराजप्रबलसेनाबलेन पराजितोऽपि सम्मिलिता तदीयाधिदैवशक्तिरेकाधारे जगदम्बाया आश्रयमवलम्ब्य अजेयमपि दानवराजं पराजेतुं प्रभवेदत्र कः संशयो भवेत्। इदं देव्या

आधिदैवं रूपमस्ति, ततो देवविशेषाणां तेजोभिर्देव्या अङ्गविशेषाः समभवन्, युद्धोपस्थितौ च सर्वदेवायुधसंग्रहप्रयोजनमजनि ॥ ३१-३२ ॥

## देवासुरपदयोर्नित्यत्वनिर्देशः ।

येषां देवपदाधिकारिणां वर्णनं पूर्वमागतम्, यैर्निजशस्त्रादिकं देव्यै समर्पितम्, तानि सर्वाणि देवपदानि नित्यानि सन्ति, तथैवासुराणां यानि स्थायिपदानि तेषां कियन्ति नामान्यत्र व्याहृतानि, तानि सर्वाण्यधिदैवरूपाणि वर्त्तन्ते । उभयेषामेषां देवासुरपदाधिकारिणामाध्यात्मरूपाणि वृत्तिराज्ये ज्ञानिनोऽनुभवन्ति । इन्द्रपदमिव असुरेन्द्रपदमपि नित्यं प्रतितिष्ठति, तत्र केवलं पदाधिकारिणः परिवर्त्यन्ते ॥ ४१ ॥

## युद्धदुर्निवारत्वप्रतिपादनम् ।

युद्धं प्रकृतेर्नैसर्गिकी क्रिया । धर्माऽधर्मयोर्युद्धम्, सामाजिकसंग्रामो वृत्तिराज्ययुद्धम् इत्थं वा दैवे जगति देवासुरसङ्गरं प्राकृतिकश्रृङ्खलासामञ्जस्यरक्षणार्थं स्वभावतः स्वयं समुत्पद्यते । युद्धक्रिया स्थूलाज्जगतः सूक्ष्माद् दैवराज्याद्वा नापसर्पितुमर्हति । सूक्ष्मे दैवराज्ये देवानसुरांश्च स्वस्वाधिकारे नियम्य दैवाधिकारसाम्यरक्षायै देवासुरसंग्रामः प्रवर्त्तते, अपि च यदा असुराणां तपोबलं देवानां तपःप्रभावात् समधिकमेधते तदैव महाशक्तेराविर्भावस्य प्रयोजनमुपपद्यते तथैवात्र मृत्युलोकेऽप्यवताराणां प्रादुर्भावः प्रयुज्यते ॥ ५१ ॥

## अशीतितमाध्याये देव्याः स्वरूपविवेचनम् ।

एतत् पूर्वमेवोपपादितम्, यत् त्रिगुणात्मिकाया महाशक्तेः प्रथमचरित्रं तामासकशक्तिरहस्यैः प्रपूर्यते । तस्मात्तत्र चरित्रे युद्धकार्यं भगवता विष्णुना सम्पादितमभूत् । अथेदं द्वितीयचरित्रं ब्रह्मशक्ते रजोमयरूपरहस्यैः परिपूर्णमास्ते । यद् युद्धमत्र वर्णितम्, तस्य सर्वे विषयाः समाधिगम्याः सत्याः सन्ति, नास्त्यत्र सन्देहः । पशूनां महिषः तमोगुणस्य साक्षात् प्रतिकृतिरास्ते । युद्धावसरेऽसुरराजस्य महिषरूपधारणमनन्तकोटिब्रह्माण्डजनन्या महामायाया इदमीयद्वितीयचरित्रविज्ञानं समधिकं पुष्णाति । तमोबहुलं रजः कियन्तमनर्थमुत्पादयितुमर्हति यद्दमनाय साक्षाद् ब्रह्मशक्तेरपि रजोमयैश्वर्यसाहाय्यग्रहणमावश्यकं प्रतिपद्यते । एतच्चरित्राध्यात्मिकतत्त्वमिदमेवास्ति, यत् किल समाधिना गम्यते । वस्तुतस्तु दुर्गादेव्या उपास्यरूपस्याध्यात्मिकं

तात्पर्य्यमिदं बोध्यं यत् रजोगुणेन सिंहेन भगवत्या वाहनेन सता तमोगुणो महिषासुरः स्वसात्कृतः, यत्र शुद्धसत्त्वमयी चिन्मयरूपधारिणी ब्रह्मशक्तिर्विराजते। देवाऽसुरसंग्रामे विजयलाभानन्तरं जायमानदशाया इदं शान्तं सत्त्वमयं स्वरूपं विद्यते, यतो युद्धकाले तु रजो विकाश्यते किल ॥ २१ ॥

## मधुपानरहस्यप्रकाशनम्।

एतन्मधुपानरहस्यमतिनिगूढभावैः प्रपूर्यते स्म। समाधिभाषामय्याः सप्तशतीगीतायाः प्रत्येकं पद्यं प्रत्येकं पदमपि त्रिभावपरिपूर्णमस्ति। परं सर्वेषां त्रिभावात्मिका व्याख्या नितान्तं दुर्ज्ञेया, अनेकस्थलेषु बुद्धिभेदमपि जनयेत्। परमेष मधुपानप्रसङ्गः सदाचारं विरुणद्धि तस्मादस्य त्रिविधं व्याख्यानमुपयुज्यते। तथा हि, मादकद्रव्येषु परमविभूतिमन्मधुपानं योगाङ्गान्यतमप्रत्याहारधारणाप्रतिपत्तये कल्पते। योगिनोऽन्वभवन् यन्मादकद्रव्यं ध्यानसमाधिबाधकमपि अन्तर्मुखीनव्यक्तिवर्गे त्वरितं प्रत्याहारमुत्पादयति धारणायामपि सिद्धिं प्रयच्छति। ऐशीं सिद्धिमुपलब्धुं या धारणाध्यानसमाधिमूलिका संयमक्रिया वर्त्तते यत्र च धारणायाः प्राधान्यं प्रशस्यते, तत्रापि मधु कारणतां भजते, तस्मात्तन्त्रशास्त्रेष्वेनत् 'कारण'मपि कथ्यते। मधु, शक्तेराधिभौतिकी प्रतिकृतिः परिगण्यते, अस्मादेतावत् फलमुत्पादयितुं प्रभवति। किन्तु, समर्था योगिनो हि एतेनैतादृशलाभमुपभोक्तुं क्षमन्ते। तदन्येषां कृते त्वेतन्मधुग्रहणं परमां विपत्तिं जनयति। तस्मादेव कारणान्नैतदसुरराजस्य पेयमभूत्, अपि तु महामाया एव पेयमेतदिति निश्चितम्, एतन्मधुपानस्याधिभौतिकं रहस्यम्। अन्तर्जगत्या वृत्तिराज्ये रहस्यस्यैतस्याध्यात्मिकं स्वरूपं किमपि अन्यदेवास्ते, घोरतमोबहुलरजोगुणस्य परास्तये सात्त्विकान्तःकरणे विशेषप्रेरणाप्रयोजनमुपजायते। तद्विशेषप्रेरिका शक्तिरेतन्मधु मन्यते शास्त्रैः। रजोगुणपूर्णत्वं विना दुर्दमनीयस्तमोवेगो नैव परास्येत। अपरञ्च, सात्त्विके प्रशान्तचित्ते तद्रजोवेगोत्पादनाय कर्त्तव्यमूलकः सङ्कल्पो नितान्तमावश्यको भवति, नान्यथा प्रशान्तव्यक्तिरेतादृशीं क्रियां कर्तुमुपयुनक्ति। इदमेवाध्यात्मतत्त्वमस्यास्ति। आधिदैवं तु जगदम्बायाः प्रकृतचरितेऽस्मिन् प्रकटितमेवास्ते ॥ ३८ ॥

## चतुरशीतितमाध्याये जगदम्बास्वरूपमहत्त्वनिर्देशः।

प्रतिब्रह्माण्डं भगवन्तो ब्रह्मविष्णुशिवाभिधानास्त्रयो देवाः स्वाधिकारानुरूपमीश्वरा आम्नायन्ते। ते किलानन्तकोटिब्रह्माण्डजनन्या अनाद्यन्तस्व-

रूपं कथमवगन्तुं शक्नुयुः, यतस्तेषां ज्ञानमेकब्रह्माण्डस्य देशकालाभ्यां परिच्छिद्यते ॥ ७ ॥

### शक्तेस्त्रैविध्येऽपि शक्तिद्वयस्यैव वर्णने कारणमाह ।

अत्र मुक्तिप्रसङ्गहेतोः केवला वैष्णवी शैवी च शक्तिद्वयी वर्ण्यते स्म । नात्र तृतीया ब्राह्मी शक्तिर्वर्णिता । श्रीमद्भगवद्गीता प्रमाणयति यद् मुक्तिः कर्मयोगेन साङ्ख्ययोगेन वा साध्यते । कर्माश्रित्य वासनाराहित्येन कर्मप्रवाहे प्रवहणं कर्मयोगः, अतिसाक्षप्रधानतया तत्त्वज्ञानावलम्बनेन मुक्तिमार्गे अग्रेसरणं साङ्ख्ययोगः । यथाक्रममुभावेतौ शैवीं वैष्णवीं चोपासनां सम्बध्नीतः । तस्मादुपास्यदेवतासु भगवतो ब्रह्मदेवस्य सम्बन्धाभावात् केवलां गौरीं लक्ष्मीं च शक्तिद्वयीमेवावर्णयन्महर्षिः ॥ ११ ॥

### देव्याविर्भावकारणप्रदर्शनम् ।

जगत्प्रसूतिका जगत्पालिका जगदम्बा यत् किञ्चित् कार्यं करोति तत् सर्वं लोकानां जीवानां च कल्याणनिमित्तं विद्यते । यदि च जैवदृष्ट्या किमपि कार्यमनिष्टमेव प्रतीयेत परञ्च कर्मगतिवेदिनां निकटे एतदेव प्रमाणितं भवेत् यन्मङ्गलमय्या जगदम्बिकाया इच्छया यत् कार्यं भवति, तज्जीवानां मङ्गलाय स्यात् । तस्य प्रत्यक्षप्रमाणमिदं देवासुरसङ्गरमेवास्ते । सर्वशक्तिमय्याः क्षणिकभ्रूभङ्गेनैव असुरराजस्य सर्वस्वनाशो मरणञ्च शक्यमासीत् । परञ्च असाधारणतपस्याफलभोगिनोऽसुरराजस्यान्ते स्वर्गलोकलाभाय सामान्यमृत्युमदत्त्वा रणाभिमुखमृत्युसम्पादनार्थं तपोभ्रष्टानां देवानामधःपतनात् परिरक्षणार्थं तथैव निजप्रत्यक्षशाक्तविलासं दर्शं दर्शं भक्तानां दृष्टिं दैवं जगत् प्रत्याकृष्टुं लीलामयी जगदम्बिका एतादृग् लीलाललाम व्यतनोत् । अत्रार्थे संशयो भवितुमर्हति, यत् असुरराजस्तु पूर्वमेव स्वर्गलोकं स्वायत्तीकृतवान्, पुनः सर्वशक्तिमयी अन्ते रणाभिमुखहतं तमसुरराजं स्वर्गलोकमनयत्, किं तात्पर्य्यमस्य, अत्र समाधीयते, असुरगणो निजतपस्याप्रभावेण तपोहीनदेवराजसेनां पराजित्य केवलं तृतीयमूर्ध्वलोकं यावद् गन्तुं पारयेत यत्र देवराजस्य राजधानी विराजते, किन्तु तस्मादुपरिष्ठादूर्ध्वलोकेषु गन्तुं नार्हति । असुरयोनित्यागानन्तरं विशेषदेवयोनिमुपागतोऽसुरगणः तस्मादुच्चैर्लोकानपि समासाद्य दिव्यान् भावानुपवोढुं शक्नुयात्, एतदेव तात्पर्यमस्य ॥ १८—१९ ॥

### भगवत्या विरुद्धगुणाश्रयत्वस्य तात्पर्यमाह ।

कृपा निष्ठुरता च इमे द्वे वृत्ती मिथो विरुद्धे वर्त्तेते । यथा दिनं

रात्रिः, ज्ञानम् अज्ञानम्, अन्धकारः प्रकाशश्च इत्यादिद्वन्द्ववृत्तयः परस्परविरोधितया नैकाधारे स्थातुमर्हन्ति, तथा किल निष्ठुरता कृपा च युगपन्नैकत्र निवसेत्। किन्तु जीवे यत्कार्यमसम्भवं तदेव सर्वशक्तिशालिन्यां जगदम्बायां सुतरां सम्भवं सम्पद्यते, यतोऽसौ असम्भवमपि सम्भवं कर्त्तुं क्षमते। तथा हि, सैवाऽविद्यारूपधारिणी जीवानेकतो बध्नाति, द्वितीयतोऽसावेव विद्यास्वरूपिणी जीवेभ्यो मुक्तिं प्रयच्छति, इतिदृष्टान्तानुबन्धात् कर्मनियन्तृत्वेन; सर्वदर्शित्वेन, सर्वजीवहितकारितया च वर्त्तमानकालीनं तदीयमाचरणं तन्निष्ठुरमपि भविष्यद्विवेचनया तस्यास्तन्नैष्ठुर्यमसुराणां मंगलाय कारणमुपजायते, तस्मात् तच्चित्ते कृपा बाह्यव्यवहारे नैष्ठुर्यं सम्भवेदिति स्वतः सिध्यति। ज्ञानस्य, शक्तेः, कर्मगतेरभिज्ञतायाश्च पूर्णतां विना नैतत् सम्भवितुमर्हति। एतद्विमृश्यमानैर्देवैर्जगदम्बास्तुतौ तथाविधशब्दाः समुच्चारिताः ॥ २२ ॥

### यज्ञमहायज्ञयोर्लक्षणप्रतिपादनम्, देवासुरशक्तिसामञ्जस्यस्य फलनिर्देशश्च।

निजाभ्युदयनिःश्रेयसनिमित्तं यद्धर्मकार्यमनुष्ठीयते स यज्ञः, यत्तु जगदभ्युदयनिःश्रेयसकृते धर्मकार्यं विधीयते स महायज्ञः प्रोच्यते। यज्ञा महायज्ञाश्च विविधा भवन्ति, यथा-दानयज्ञः तपोयज्ञः, कर्मयज्ञः, उपासनायज्ञः, ज्ञानयज्ञश्च। एते यज्ञाः प्रत्यन्तर्भावभेदैरनेके सन्ति। यान् केचन महर्षयो द्विसप्ततिवर्गेषु व्यभजन्। असौ देवानामुपासनायज्ञ आसीत्, जगत्कल्याणबुद्धया समनुष्ठीयमानतया महायज्ञोऽप्यवर्तिष्ट। यदा दैवी आसुरी च शक्तिद्वयी नैजाधिकारिकं कार्यं कुर्यात्, तदा शक्तिद्वयस्य सामञ्जस्यमवतिष्ठेत, एकोऽपराधिकारमपहर्त्तुं न पारयेत् तदैव चतुर्दशभुवने धर्मस्थापना भवितुं शक्नुयात्, बलबुद्धिविद्यैश्वर्य्यादिप्रकाशेन सुखं शान्तिश्च विराजेताम् ॥ ३६ ॥

### पञ्चाशीतितमाध्याये शुभाशुभकर्मविवेचनम्।

पुण्यफलेन लक्ष्मीः पापफलेनाऽलक्ष्मीः प्राप्यते। पुण्यपापानि शुभाशुभकर्मफलानि च सर्वाण्येतानि शक्तेर्विलासा विद्यन्ते तस्मादुभयान्यत्राभिहितानि ॥ ११ ॥

### कृष्णादिपदप्रतिपाद्यमानसम्बोधनरहस्यविवृतिः।

कृष्णा, धूम्रेति पदाभ्यां प्रतिपाद्यमाने इमे द्वे सम्बोधने सातिशयरहस्यबहुले विद्येते। कृष्णं कृष्णवर्णं धूम्रं धूम्रवर्णं रङ्गं व्याचष्टे। प्रकृतिशक्तिः प्राधान्येन कृष्णा वर्त्तते, शुद्धे सत्त्वे च कार्यं नोत्पद्यते यदा शुद्धसत्त्वात् कार्यमारभ्यते तदा तस्यां सात्त्विकोज्ज्वलतायां या कियती श्यामता समुत्पद्यते,

तदेव धूम्रापदप्रयोगरहस्यम् । योगिजना इमां द्वयीं समाधावनुभवन्ति । सौम्यो रौद्रो भयानको वा विरुद्धरसबोधकावेतौ स्तः । रसरूपायां भगवत्यामेव युगपदेकाधारेऽनयोः सद्भावः सिध्यति । यथा पूर्वं कृपानिष्ठुरतावृत्तिविषये व्याख्यातम् । ब्रह्मणा सह ब्रह्मप्रकृते र्यो हि सम्बन्धः, प्रकृत्या सह गुणत्रयस्यापि सम्बन्धस्तादृगेव बोध्यः । अपि च त्रिगुणतरङ्गादेव कर्मोत्पद्यते । तस्मादसौ क्रियारूपिणी निरूप्यते ॥ १३ ॥

## प्रतिपद्यं पञ्चवारं नमःशब्दप्रयोगप्रयोजनप्रतिपादनम् ।

पूर्वोक्तस्तुतिस्तोमे प्रतिस्थलं पञ्चवारं 'नमः' इति प्रयुक्तम् । समाधि-भाषाशब्दो न वृथा प्रयुज्यते, तस्मादित्थमत्र प्रणिधेयं यत् प्रत्येकं स्थले पञ्च भावानाश्रित्य पञ्चवारं नमस्कारो विहितः । प्रथमं, तद्वाचकवाच्यस्याधिभूत-रूपं द्वितीयमधिदैवरूपं तृतीयमाध्यात्मरूपं चतुर्थं सर्वकारणभूतायाः सर्व-शक्तिमय्या मूलप्रकृते रूपं पञ्चमं-शक्तिशक्तिमतोरभेददशागोचरं तुरीयरूपम्, एवं पञ्चरूपमयं भावपञ्चकमभिलक्ष्य विबुधैः प्रतिस्थलं नमस्कारपञ्चकमकारि । येन भक्तानामन्तःकरणं तस्मिन् परमपदे विलीनं स्यात् ॥ ८० ॥

## भगवत्याः कौशिकीस्वरूपोत्पत्तिरहस्यप्रकाशनम् ।

ब्रह्मणो ब्रह्मस्वरूपिण्या जगन्मातुश्चानयोर्भेदो नास्ति, द्वयोरैक्यमस्ति । ब्रह्मेश्वरविराट्पुरुषब्रह्मशक्त्यादयो भेदा महामायाया महत्त्वप्रकाशका वैभव-समर्थकाश्च विद्यन्ते । दैवीमीमांसादर्शनेनैतत् सिध्यति यत् सगुणनिर्गुणयोर्यो हि भेदो विद्यते, सोऽयं भेदः केवलं ब्रह्मशक्तेर्महत्त्वप्रकाशनार्थमास्ते । यावदसौ महाशक्तिः स्वस्वरूपाऽन्तर्हिताऽवतिष्ठते तावत् त्रयाणां सच्चिदानन्दभावानामे-कस्मिन्नद्वैतरूपेऽनुभवो जायते । सा तुरीया शक्तिर्यदा स्वस्वरूपे प्रादुर्भूय सच्चितौ पार्थक्यतः परिदर्शयन्ती आनन्दविलासमुद्भावयति तदाऽसौ पराशक्तिः कथ्यते, पुनरेषैव पराशक्तिर्यदा स्वरूपज्ञानमुत्पाद्य जीवानां सद्भावेन सह स्वय-मपि स्वस्वरूपविलीना निःश्रेयसमुदयति तदा सा पराविद्या प्रकीर्त्यते । एते द्वे अवस्थे सृष्टिविलासोत्पत्तिलयकारणे विद्येते । इमा औपनिषदिक्योऽवस्थाः समाधिसन्धेयाः सन्ति । अन्यप्रकारेणापि विज्ञानमेतद्वेदनीयम् । तथा हि, यदासौ स्वस्वरूपे तुरीयात्मिका महामाया द्वाविमौ सच्चिद्भावौ पृथक्कृतयाऽनु-भावयितुमानन्दविलासमयं दृश्यजातमाविर्भावयति तदासौ पराशक्तिरित्याख्यां भजते पुनर्यदा जीवस्य निःश्रेयसप्राप्तिकाले आत्मज्ञानोदयं विदधाना स्वयं स्व-स्वरूपाङ्के अन्तर्निधत्ते तदैषा तदीयावस्था नाम्ना पराविद्याऽऽख्यायते । एत-देवोपनिषद्विवृतं रहस्यम् ।

वस्तुत इमे द्वे अवस्थे तुरीयाशक्तेरेव भेदौ स्तः, 'अहं ममेतिवत्' ब्रह्मब्रह्मशक्त्योस्तु भेदो नास्ति, इति पूर्वमेव प्रतिपादितम् । उभयोरेतयोरेव तुरीयशक्त्योरनन्तवैभवयुक्ते रूपे सप्तशतीगीताया अस्मिन् स्थले कौशिकीकालिकारूपाभ्यामभिहिते । इदमपि समाधिगम्यमुपनिषदो रहस्यम्, यत् सच्चिदानन्दभावानामन्यतमेनास्तिभावेन प्रकृतित्वं भातिभावेन पुरुषत्वं तथोभयोविलासेन आनन्दवैभवात्मकं दृश्यप्रपञ्चजातं प्रादुर्भवति । प्रकृतिः सद्भावाश्रयेण परिणमति, तस्मात्सद्भावमयं हि नगराजहिमालयस्याध्यात्मस्वरूपमस्ति । असौ प्रकृतिप्रसूतजड़मयदृश्यस्य प्रतिकृतिर्हिमालयः सर्वविधैश्वर्याकरत्वेन पुराणप्रतिपादितो गौर्याः पित्रालयोऽपि विद्यते । पुराणशास्त्रेण सद्भावाश्रितमधिदैवरूपं गौर्याः पितृत्वेन वर्ण्यते, तत् किल विज्ञानसिद्धमेव । देवासुरसंग्रामस्य त्रिविधं स्वरूपं पूर्वमेव निर्णीतम् । इन्द्रियसुखनिदानैरविद्याजनितैरस्मितारागद्वेषाभिनिवेशैर्यद्वृत्तयोऽन्तःकरणं विलोडयन्ति, सैवाऽवस्था असुरशक्तिप्रधानतयाऽऽध्यात्मिकं स्वरूपं वर्त्तते । द्वितीयत एतामवस्थामासुरीं पराजित्य जयलिप्सया शक्तिविलासक्षेत्रं हिमालयमुपेत्य पराशक्तेः पराविद्यायाश्च जगन्मातुर्महामायाः सामीप्यमुपेता या वृत्तयः स्तोतुं क्षमन्ते सैवान्तःकरणावस्था देवानामाध्यात्मस्वरूपं सम्बध्नाति, इत्यवगन्तुमुचितम् । स्वरूपज्ञानप्रवाह एव गङ्गाया आध्यात्मं स्वरूपं वरीवर्त्ति । स्वरूपाङ्के स्थितायाः तुरीयशक्तिस्वरूपिण्या जगन्मातुरेवंविधायाया गङ्गायां स्नानं स्वाभाविकं किलास्ते । भक्तानामार्त्तनादेन वहिर्दृष्टिसद्भावे खलु सा ब्रह्मशक्तिः स्वरूपद्वये विभक्ताऽभूत्, तत्र कौशिकीस्वरूपाऽसौ देवानां भयनिवारणे निरता बभूव । द्वैतसत्तायां यच्चिद्भावे सद्भावस्य प्राधान्यं वर्त्तते तदेव देव्याः श्मामवर्णत्वमभिहितम् । योगिजनदुर्लभमेतदध्यात्मरहस्यमुपनिषदां सारभूतमगन्तव्यम् । एतावता नैवा प्रतीतिरुद्भाव्या यदस्या गाथाया आधिदैवमाधिभौतं वा रहस्यं नास्त्येव, अथवा देवासुरसंग्राम एव नाभवदिति च । एतत् त्रिविधभावमयरहस्यं तु पूर्वमेव सङ्केतितम् ॥ ८४-८८ ॥

षडशीतितमाध्याये हुङ्कारतो धूम्रलोचनवधस्याध्यात्मरहस्यप्रकाशनम् ।

हुङ्कारेणैवासुरसम्राट्सामन्तधूम्रलोचनभस्मीकरणस्य यदधिदैवं चरित्रमुपवर्णितम् । तस्याध्यात्मभावः सातिशयरहस्यपूर्णो भक्तानन्दप्रदायकश्च विद्यते । दैवसम्पत्तिशालिसमुन्नतव्यक्तेरन्तःकरणे यदा काचनेन्द्रियासक्तिमूलिका असद्वृत्तिरुदेति तर्हि चरणारविन्दमकरन्दपानमत्तो भक्ता यदा प्रमत्तं मनो भर्त्सति तदा त्वरितमेव मनसो निग्रहो जायते, येन क्षिप्रं मनः सावधानतां

व्रजति, तदा तदीयासुरी वृत्तिरपि भस्मसादुपजायते । अन्तर्मुखीनवृत्तयो भक्ताः प्रायः स्वस्मिन्नन्तःकरणे इत्थं धूम्रलोचनवधं निरन्तरमनुभवन्ति, किञ्च यदाऽन्तःकरणे भूयो भूय आसुरी वृत्तिरुत्पद्यते तदा युद्धमनिवार्यमुपजायते । तद्युद्धं यदि कूटस्थाधिपत्ये इष्टदेवं सम्मुखीकृत्य वा क्रियेत तदा सर्वदैव विजयो जायते । अधिभूते जगति त्वेवंविधो धूम्रलोचनवधः प्रायो दृश्यते । प्रथमदशायां दैवसम्पत्तिशाली जनो विभीषिकाप्रदर्शनेनैवासुरीं प्रजां परिभर्त्स्य तदीयामासुरीं चेष्टां दमयति ॥ १३ ॥

## सप्ताशीतितमाध्याये रजोगुणमहत्त्वप्रकाशनम् ।

अस्यां प्रथमदशायां तामसोन्मुखं रजोगुणं शुद्धो रजोगुणो विनाशयितुं शक्नोति । जगत्यामपि दृश्यते यदेकैव रजोगुणशक्तिसम्पन्ना राजशक्तिर्नैकाः तामसिकप्रजाः स्वायत्तीकरोति । एतेनाधिभौतिकदृष्टान्तेनैवाध्यात्माधिदैव-रहस्ये चावगन्तव्ये ॥ १५-१८ ॥

## कालिकाचामुण्डयोरध्यात्मस्वरूपनिर्देशः ।

पूर्वमेव ब्रह्मप्रकृतेः स्थूलसूक्ष्मकारणतुरीयाख्यं चतुर्विधं स्वरूपमुपवर्णितम् । तस्या एतद्रूपचतुष्टये भगवद्ब्रह्मविष्णुशिवजनन्या जगदम्बिकायाः पाशाङ्कुशवराभयधारिण्याः कारणशक्तेस्तमोमयं रूपं प्रथमचरित्रे प्रकाशितमभवत् । तस्या एव महासरस्वती-महाकाली—महालक्ष्मीरूपिण्या रजःप्रधानो महिमा द्वितीयचरित्रे प्रकाशयाञ्चक्रे । अत्र तृतीयचरित्रे तस्याः सत्त्वप्रधानलीला वर्ण्यते, सर्वाश्रयभूतायास्तुरीयशक्तेः स्वरूपद्वये कौशिकीदेव्यैव देवासुरसंग्रामे संलग्ना जायते । द्वितीयकालिकास्वरूपेण सार्द्धमस्मिन् चरित्रे वर्णितस्य कालीरूपस्य सम्बन्धो नैव बोध्यः । पूर्वोक्ता कालिका तुरीयशक्तिसद्भावात् प्रादुरभवत् । इयं तु चामुण्डाकालीयुद्धे कौशिकीदेव्या ललाटदेशादजनि । सत्त्वगुणप्राधान्यावस्थायां वैराग्यविभूतिविभूषित-तत्त्वज्ञानस्य प्रबला दशैव चामुण्डाभिधायाः कालीदेव्या अध्यात्मस्वरूपमस्ति । तस्याः कृपासद्भावे इन्द्रियपरायणा सर्वा किलासुरी सेना स्ववाहन-सहिता तस्याः करालवदने प्रविशति । यावद्विषयप्रपञ्चजातं तदीयं भक्ष्यमपि विद्यते । तन्त्रेषु कालिकाचामुण्डयोः पृथक् पृथक् रूपे निर्दिष्टे, ब्रह्मरूपे शवे विराजमानं महाकालं स्ववशमानयन्त्याः तद्वक्षसि स्थितायाः महाकाल्याः स्वरूपं प्रदर्शितम्, चामुण्डायाः स्वरूपन्तु उपरिष्टाद्वर्णितमेवास्ते । ब्रह्म जडवन्निश्चेष्टमादधाना अनाद्यन्तं महाकालं स्वायत्तं विदधाना केवलेन निजेङ्गित-

मात्रेणैव अनन्तकोटिब्रह्माण्डसृष्टिस्थितिलयकारिणी कालिका देवी विद्यते। किन्त्वसौ चामुण्डादेवी इन्द्रियोन्मुखोद्दामचित्तवृत्तिरूपमसुरदलं भक्षयित्वा जीवेभ्यो निःश्रेयसं प्रयच्छति ॥ ६-११ ॥

## चण्डमुण्डवधविज्ञाननिर्देशः ।

यथा कूटस्थचैतन्यव्यापिकाया महादेव्या हुङ्कारेण धूम्रलोचनवधो भवितुमर्हेत् न तथा चण्डमुण्डयोर्वधः सम्भवेत्। चण्डमुण्डयोर्वधं तु चामुण्डाकाली किल कर्त्तुं शक्नोति। तथा हि, आसुरभावजनितौ रागद्वेषावेव चण्डमुण्डनामकावसुरौ वर्त्तेते। अधिदैवरूपसम्पन्नस्य दैवराज्यस्यानयोरुभयोरसुरयोरध्यात्मरूपे एते एव स्तः। कालीदेव्या अध्यात्मरूपं पूर्वमेवोक्तम्, यद्विवेचनया विदितमेतद् भवेत् यदेतौ कथं काल्या वध्यौ स्याताम्। रजस्तमःप्रभवौ रागद्वेषौ विद्येते, रजस्तमःसमन्वयश्च सत्त्वे सम्भवति। सत्त्वगुणे एव सृष्टिसामञ्जस्यं सुरक्षितं भवति। तस्मात् कालीदेवी चण्डमुण्डयोः शिरसी सत्त्वगुणमयीं महादेवीमुपाहरत् ॥ २०-२४ ॥

## शिवस्य दौत्यकर्मरहस्यप्रकाशनप्रसङ्गे विष्णोः शिवस्य चोपासनां विवृणोति ।

उपासनासम्बन्धेन विष्णोः शिवस्य चोपासना शास्त्रसम्मता वर्त्तते। यतो मुक्तिप्रसङ्गेऽनयोरेव प्राधान्यमस्ति। चिद्विज्ञानेन साङ्ख्ययोगस्य सद्विज्ञानेन कर्मयोगस्य च वर्णनं श्रीगीतोपनिषदि सम्यगुपलभ्यते। साङ्ख्ययोगस्य भगवान् विष्णुः कर्मयोगस्य च भगवान् शिवो यथाक्रमं फलदाता विद्यते- तस्मादेव प्रथमचरित्रे भगवतो विष्णोः तृतीयचरित्रे च भगवतः शिवस्य सम्बन्धो दर्शितः। प्रथमे सृष्टिप्रसङ्गसद्भावात्स्वयमेव विष्णोर्युद्धविधानमावश्यकमभूत्। तृतीयचरित्रे च लयप्रसङ्गतः शिवस्य केवलं साहाय्यमेवापेक्षितमभवत्। किञ्च, प्रथमचरित्रे तमोमय्या देव्याः केवलं साहाय्यादानमेव प्रयोजनीयमभूत्, अस्मिन् तृतीयचरित्रे तु प्रत्यक्षतो युद्धसमाप्तिविधानमावश्यकं जातम्। एतेन भगवतो विष्णोः शिवस्य चाध्यात्मिकं स्वरूपमभिलक्षिष्यते, किन्तु देवानामेभिराध्यात्मरूपैर्न कैश्चिदमीषामाधिदैविकान्याधिभौतिकानि वा रूपाण्यश्रद्धेयानि। एतेषामधिदैवस्वरूपैः सप्तशतीग्रीतेयं दैवशक्तिसम्पन्ना समजनि, तथा च सर्वेषामेषामधिभूतरूपाणि षष्ठे सप्तमे चोपासनालोके भक्तैः प्रत्यक्षं दर्शनीयानि। उपासका निजोपासनाबलेन तान् लोकानुपेत्य कृतार्था जायन्ते। प्रबलोऽयं देवासुरसंग्रामः प्रावर्त्तत, ततः सर्व-

देवशक्तिप्रादुर्भावो नितान्तमावश्यक आसीत् । तस्मिन्नवसरे विवेकरूपिणी शिवदूती मुक्तिप्रदातारं शिवं दौत्यकर्मणि समयोजयत्, सृष्टेः सामञ्जस्यरक्षया प्रकृतिप्रवाहे सारल्याय च पुनरेकवारमन्तिमावसरमसुरेभ्यः प्रायच्छत्, यत्ते देवाधिकारमुत्सृज्य स्वाधिकारानधिगच्छन्तु ॥ २६-२७ ॥

## अष्टाशीतितमाध्याये रक्तबीजवधे त्रिविधभावप्रदर्शनम् ।

यथा चामुण्डानामिकायाः कालीदेव्याश्चण्डमुण्डौ वध्यौ स्तः, तथैव रक्तबीजवधेऽपि तत्साहाय्यं प्रधानत्वेन सुतरामपेक्ष्यते । एतत् प्रथममभिहितम्, यत् सप्तशतीगीता त्रयाणामाध्यात्माधिदैवाधिभूतभावानां प्रकाशिका प्रवर्त्तते, ततस्तदीयं प्रत्येकं प्रकरणं त्रिभवात्मकमास्ते । तेनैव क्रमेणासुररक्तबीजस्यापि स्वरूपं त्रिभावात्मकं निश्चीयतेस्म । रक्तबीजस्याध्यात्मस्वरूपमवगन्तुं पूज्यपादमहर्षिभरद्वाजप्रणीतकर्ममीमांसादर्शनस्य संस्कारप्रकरणमवबोद्धव्यम् । कर्ममीमांसादर्शनेन संस्कारस्य द्विविधौ भेदावभिहितौ, स्वाभाविकः अस्वाभाविकश्च । तत्र स्वाभाविकः संस्कार एक एवास्ति, अस्वाभाविकः संस्कारो ऽनन्तो विद्यते । स्वाभाविकः संस्कारो मुक्तिं प्रयच्छति अस्वाभाविकस्तु संस्कारो बन्धनदशां नितान्तं दृढयति । अस्वाभाविकसंस्कारस्यैकेनैव संस्कारेणानन्ताः संस्काराः समुत्पद्यन्ते केवलेन तत्त्वज्ञानेन जायमाने वासनाविनाशेऽस्वभाविकः संस्कारःस्वतो नश्यति । जैववासनाजनितोऽस्वाभाविकः कर्मबीजसंस्कार एव रक्तबीजासुरस्याध्यात्मिकं स्वरूपमाम्नायते । यावन्तं कालं रक्तबीजस्य रक्तं पृथिव्यां पतिष्यति तावत्कालावधि प्रत्येकरक्तबिन्दुबीजतो नानावासनाजनितो नवीनः संस्कारो जायमानो नवो रक्तबीजो नूनमुत्पत्स्यते । भोगस्थायित्वे गमनागमनचक्रनिरन्तरविघूर्णायमानत्वे च हेतुरयमेवास्ते । यदि तत्त्वज्ञानसाहाय्यादन्तःकरणे तत्संस्कारसंग्रहो निरुध्येत तत्त्वज्ञानोदयेन च मनोनाशसद्भावे नवीना वासना न संगृह्येत तदैव रक्तबीजनाशः सम्भवेत् । देवासुरसंग्रामे देव्याश्चण्डिकायाः साहाय्येन रक्तबीजपराजयस्य तन्मरणस्य चाध्यात्मिकं रहस्यमेतदेव । कालीदेवी चण्डमुण्डौ स्वयमाजघान रक्तबीजवधे च परमा सहायिका समजनि । रागद्वेषयोर्विनाशस्तत्वज्ञानेन भवितुमर्हति, परन्तु दृढाभिनिवेशजन्यो जैववासनासम्भवोऽस्वाभाविकसंस्कारो विद्याया अनुकम्पां विना तत्त्वज्ञानसाहाय्यमन्तरेण च विनष्टुं न शक्नोति । एतद्देवोपनिषत्तत्त्वम् ॥ ६३ ॥

## नवाशीतितमाध्यायेऽन्तिमचरित्ररहस्यप्रकाशनम् ।

श्रीसप्तशतीगीतायाश्चरित्रत्रये चरित्रमिदमन्तिममद्भुतै रहस्यैः परिपूर्ण-

मास्ते। यदि च सप्तशतीगीतायाः प्रत्येकं शब्दः शब्दजातो वाऽध्यात्माधिदैवाधिभूतैस्त्रिभिरर्थैः प्रपूर्यते स्म, यद्दिग्दर्शनं यथास्थानं प्रथमभिहितम्, परन्तु निखिलस्थलानां त्रिविधोऽर्थो नैतादृशेऽल्पीयसि ग्रन्थे भवितुमर्हति न वा सामान्याधिकारिणस्तदीयां धारणामेव कर्त्तुं शक्नुयुः। सप्तशतीगीतायाः प्रथमचरित्रस्य तमोमयरूपप्रकाशकत्वात्तमोगुणे,च क्रियासद्भावाभावात् तत्र भगवान् विष्णुः क्रियासम्पादनमकरोत्। द्वितीयचरित्रे तमोगुणपरास्तये शुद्धे सत्त्वे रजःसम्बन्धस्थापननिमित्तं "गर्ज गर्ज क्षणं मूढ़! मधु यावत् पिवाम्यहम्" इत्याद्यलौकिभावानां कीदृक् समावेशो व्यधायि तत्तु सुधियो भावुकाः स्वयमेवावगन्तुं पारयेयुः। अत्र तृतीयचरित्रे भगवत्या निर्लिप्तत्वेन सह क्रियाशीलता परमालौकिकरीत्या प्रादुरभवत्, यतश्चरित्रमिदं सत्त्वप्रधानमुदीरितम्, अस्मिंश्चरित्रे प्रथममेव भगवत्या देव्याः कालिकाया हिमालये स्थिरनिवासः, कौशिकीदेव्या युद्धविधानम्। ततश्चामुण्डायाः कालीदेव्याः शिवदूत्याश्च पुनराविर्भावोऽपि कीदृशं गभीरं विज्ञानं प्रकाशयति तत् पूर्वमेव प्रतिपादितमभूत्। रागद्वेषयोरभिनिवेशजन्यवासनाजालस्यास्वाभाविकसंस्कारस्य च विनाशेजातेऽपि अविद्याऽस्मिते सन्तिष्ठेते। एते एवाविद्याऽस्मिते शुम्भनिशुम्भयोराध्यात्मस्वरूपे स्तः। एते द्वे अविद्याऽस्मिते ज्ञानजननीं भगवतीं विद्यां विना नान्यः कोऽपि निहन्तुं शक्नोति। इदमेवैतस्य प्रकारणस्य गूढ़रहस्यम् ॥६-२८॥

## श्रीजगदम्बायास्तृतीयलीलाचरितेऽध्यात्मभावप्रदर्शनम्।

श्रीजगदम्बिकायास्तृतीयं लीलाचरितमधिदैवसम्बन्धेन यादृगेकाधारे मधुरं भीषणञ्च वर्त्तते तथैवास्याध्यात्मस्वरूपमपि समाधिगम्यै रहस्यैः परिपूर्यते। वस्तुतोऽस्य युद्धस्याध्यात्मस्वरूपं विद्याऽविद्ययोर्युद्धमस्ति। तत्त्वज्ञानविवेकाभ्यां विनष्टेष्वपि रागद्वेषाऽभिनिवेशेषु यावदविद्याऽस्मितयोर्विलयो न भवेत् तावन्न कदापि कथञ्चन कृतकृत्यता सम्भवेत्। विद्यासाहाय्येनाविद्याऽस्मिते विनाश्य जीवन्मुक्ताः कृतार्था जायन्ते। पूर्वमस्मिताया विनाशो जायते, यतोऽस्मिताऽविद्यायाः प्रथमं कार्यं तत्सहकारिणी च वर्त्तते। तस्माद्धेतोः शुम्भो ज्येष्ठो निशुम्भश्च कनिष्ठो भ्राता निर्दिष्टः। अस्मिताया एतावद्बलमधिकायते यज्ज्ञानवान् पुरुषो यदा तत्त्वज्ञानावलम्बनेनात्मज्ञानं लब्धुमुपक्रमते तदा प्रथममहं ब्रह्माऽस्मीति बोधो बोभवीति तस्मिन् क्षणेऽप्यहमात्मिकाऽस्मिता स्वीयं बलं प्रदर्शयति विद्यायाः कार्यमवरुणद्धि च। तस्मिन्नवसरे विद्याप्रभावेण 'अहं ब्रह्मास्मि' इत्यस्मितायाः लोकातीतभावस्यापि विनाशो विधेयः स्यात्, तदा स्वस्वरूपमुदेतुमर्हत्। निशुम्भाभ्यन्तरात्तन्मरणावसरेऽ-

न्यस्यैकपुरुषस्य प्राकट्यं तद्द्वारा देव्या अवरोधनञ्च पूर्वोक्तभावं पूर्णं प्रकाशयति। निशुम्भेन सह तत्पुरुषस्यापि वधे कृतेऽस्मिताया नाशो भवति देव्याश्च निशुम्भवधकार्यं सुसिध्यति ॥ ३४-३६ ॥

## नवतितमाध्याये देव्या नानारूपाणामेकीभावे विज्ञानं विवृणोति ।

पूर्वमेव ब्रह्मशक्तेस्तस्त्रोऽवस्था वर्णिताः। सा शक्तिरेकाऽद्वितीयाऽपि सूक्ष्मस्थूलशक्तितो नैकभेदभिन्नताऽस्ते। सूक्ष्मजगद्व्यापिकायाः सूक्ष्मशक्तेर्गुणत्रयानुसारतो मुख्यतो भेदत्रैविध्येऽपि विभिन्नानां देवपदानां क्रियाशक्तिविवेचनया अनेके भेदाः सन्ति। सर्वास्ता एव शक्तयोऽस्मिन् संग्रामे सञ्जज्ञिरे, सम्प्रति तस्यामेवैकाऽद्वितीयशक्तौ च सकलास्ता अन्तर्दधुः। वस्तुतो देवीशुम्भसंग्रामो विद्याऽविद्ययोर्युद्धं प्रणिधेयम्। यावन्तं कालमुभयोर्विद्याऽविद्ययोर्विलासो व्यक्तावस्थायामुज्जृम्भते तावत् क्षणमासुरी सेना देव्याः सेना च प्रकटमासाते। एकतो मृते निशुम्भेऽसुराणां विभूतयः परास्ताः प्रणष्टाश्च संजाताः, द्वितीयतो दैव्यो विभूतयो याः किल विभिन्नशक्तिस्वरूपतः आविर्बभूवुः, ता एकत्रीभूयान्तर्मुखीना देव्यां प्राविशन् ॥ ६ ॥

## आकाशयुद्धस्याध्यात्मिकभावनिर्देशः ।

अविद्याविलयः केवलमेकमात्रपराविद्यावैभवादेव भवितुमर्हति। ज्ञानजनन्या विद्यायाः सत्युदयेऽज्ञानप्रसविनी अविद्या प्रकाशे तमोराशिरिव विलयमुपगच्छति। अविद्यापनोदने नान्या काचिद् दैवी शक्तिः कार्यकारिणी जायते। तस्मात् सर्वासां दैवविभूतीनामेकस्यां महादेव्यां प्रवेशे जाते देवीशुम्भयोरिदमन्तिमं युद्धमेतादृक् प्रबलमभूत्, यदवसाने शुम्भस्य पराजयो मृत्युश्च बभूव। मृत्योः पूर्वं बलाद् देव्या आकाशमानयनं तत्र संग्रामसमारम्भश्च नास्तिकताद्योतकं रहस्यमुद्बोधयति। सर्वव्यापकब्रह्मसत्ताऽनुभूतिसाधनं विद्याकार्यं भवति परञ्च सच्चिदानन्दमयब्रह्मस्वरूपानुभवविधानक्षणेऽविद्याप्रभावतः सर्वव्यापके अकाशतत्त्वेऽवरोधनाज्जायमानः शून्यवादिभावोऽयं स्वस्वरूपानुभवे सर्वतो विराडन्तिमञ्च विघ्नं विद्यते। देवासुरसंग्रामे आकाशयुद्धस्य आध्यात्मिकरहस्यमेतदेव ॥ २२-२७ ॥

## एकनवतितमाध्याये अग्नेः पुरोहितत्वविचारः ।

देवतायामपि चत्वारो वर्णाः, अग्निदेवो ब्राह्मणवर्णो देवानां पुरोहितश्च। अग्निसाहाय्येनैव देवगणैः स्थूलराज्याद् यज्ञभागादयो लभ्यन्ते, तस्मादुपासनाकार्येऽग्निमग्रवर्त्तिनं कृत्वा देवानां स्तुतिर्युज्यते ॥ २ ॥

## स्त्रीणां देव्याः स्वरूपत्वे कारणमाह ।

ज्ञानलब्धये यावन्तो वर्त्तन्ते उपाया अस्मिन् स्थले ते सर्वे विद्याङ्गे-नोदीरिताः । संसारप्रपञ्चरक्षास्थायित्वे स्त्री निदानमास्ते । तदीययावच्छक्ति-प्रतिष्ठया विभूतिं मत्वा देवीस्वरूपतः स्त्रियो वर्णिताः । तस्मादित्थमभिहि-तम् ॥ ६ ॥

## देवासुरराक्षसानां लक्षणनिर्देशः ।

यथान्तर्जगत्यां दैवी आसुरी, चेति द्विविधे सृष्टी प्रधाने प्रकीर्त्त्यते तथैव मनुष्यलोकेऽपि त्रिविधसृष्टिवर्णनमुपलभ्यते शास्त्रे । तथा हि परोपकार-निरतो मनुष्यो देवश्रेण्यामिन्द्रियसेवानिरतो मानवोऽसुरश्रेण्यां परदुःखाभि-रुचिर्जनश्च राक्षसश्रेण्यां परिगण्यते ॥ ३२ ॥

## देव्या वरदानरहस्योद्बोधनप्रसङ्गे तीर्थेषु देवासुरसंग्राम-कथायाः कारणमादिशति ।

एतावत्पर्यन्तं देवाः केवलं स्वकीयसूक्ष्मलोकबाधाविमोचनार्थं व्यग्र-मानसा आसन्, सूक्ष्मदेवराज्यबाधापनोदने जाते तैरूर्द्ध्वमधो मध्यमं लोक-त्रयं निर्बाधं कर्त्तुकामैः श्रीजगदम्बायाः स्तुतिरारब्धा । पूर्वमस्माद् यत् किञ्चि-ल्लीलावर्णनं वर्त्तते तदूर्द्ध्वदैवराज्यस्याधिदैवलीलाया एव वर्णनं विज्ञे-यम् । उपरिष्टादुपवर्णितानि निखिलानि युद्धानि सूक्ष्मे लोके सम-भवन् । वक्ष्यमाणलीलावर्णनं मध्यमेन मृत्यलोकेन सह सम्बध्नाति । अत्र शङ्क्यते, यत् पूर्वोक्तानि सर्वाणि चरित्राणि यदि दैवलोकवन्ति तर्हि नैक-तीर्थेषु देवासुरसंग्रामनामानि कथमुपलभ्यन्ते ? तत्र समाधीयते—यदध्या-त्माधिदैवाधिभूततत्त्वानां नित्यत्वेन परस्परसम्बन्धसद्भावेन च दैवराज्येन सार्द्धमैहिकानां तीर्थानां सम्बन्धो निरीक्ष्यते । तथा हि, काश्यां सर्वेषां तीर्थानां प्रतिकृतिः प्राप्यते । इत्थं सूक्ष्मराज्याधिदैवपीठानां सम्बन्धो मृत्युलोकस्यापि तीर्थविशेषेष्वधिगम्यते । यथोपासना-पीठस्यानेके भेदाः सन्ति तथैव तीर्थजातमपि पीठमेकविधं वर्त्तते ततस्तस्यापि नाना भेदा भवन्ति । प्राणमय-कोषे य आवर्त्त उत्पद्य देवयोनिप्रतिष्ठायै स्थानमुपजायते तदेव पीठमुच्यते, यथा मृत्युलोकजन्मनां जीवानां स्थितये भूमिरास्ते उपवेशनार्थमासनञ्च विद्यते तथैव सूक्ष्मदेवलोकाधिवासिनामात्मनां स्थितये यत् स्थानं निर्दिष्टं तदेव

पीठमभिधीयते । सनातनधर्मे विविधपीठावलम्बनादुपासना विधीयते यैरवलम्बनैरुपासनापीठं निर्मीयते प्रधानतः षोडश तद्भेदाः सन्ति, यथाग्नि-जलहृदयमूर्त्तिमूर्द्धयन्त्रचित्रादयः । तीर्थादयोऽपि पार्थिवपीठेष्वित्थमेवान्तर्भवन्ति । एषाञ्च विविधा भेदा भवन्ति । जीवयान्त्रिकपीठस्योदाहरणं बटुककुमारीपूजा वर्त्तते, सहजपीठोदाहरणं दम्पतिसङ्गमावस्था ज्ञेया । यत्र निसर्गतो जीवाकर्षणेन गर्भाधानं जायते । स्थूलयान्त्रिकपीठोदाहरणस्थानीया शवसाधनादयो बोध्याः । इत्थं पीठस्य भेदबाहुल्यं विद्यते । स्थायिपीठ-समूहे विशिष्टे तीर्थादौ च पीठाभिमानिनो देवा नित्यं निवसन्ति तद्द्वारा महान्त्यपि कार्याणि सिध्यन्ति । तस्मात् पीठेन सह दैवजगतः सम्बन्धः सन्तिष्ठते स्म । अस्मात्तीर्थवर्णने तत्र देवासुरसंग्रामचर्चा समुपलभ्यते ॥ ३४ ॥

## युगादीनां वर्षसङ्ख्यानिरूपणम् ।

त्रिंशत्क्षणानामेकं दिनं भवति, अनयैव दिशा मासराशिप्रभृतीनां निर्णयेन वर्षमानं परिकल्प्यते, ततो मानववर्षगणनया ब्रह्माण्डस्यैकस्यायुर्निरणायि। मानवीय २२३९४८८०००००००००००००००००० वर्षात्मकमेकब्रह्माण्डायुर्निर्दिश्यते । एवं-विधान्यनन्तकोटिब्रह्माण्डानि श्रीजगदम्बा स्वकीयमेकनिमेषमात्रं क्षणं याव-त्सृजति संहरति च । उपर्युक्तसङ्ख्यकवर्षात्मकं भगवतो रुद्रस्यायुर्ज्ञेयम् । एकरुद्रायुःकाले विष्णुपदाधिकृतानामनेकेषां विष्णूनां परिवर्त्तनं जायते । तदीयमायुर्मनुष्यवर्षतः ४३३१२००००००००००००००० वर्षात्मकं भवति । एकस्य भगवतो विष्णोरायुःकाले प्रजापतिपदाधिकारिणो नैके ब्रह्माणः परिवर्त्यन्ते, एकस्य भगवतो ब्रह्मण आयुः ३११०४०००००००००००० मनुष्यवर्षात्मकं बोध्यम् । ब्रह्म-देवस्य प्रतिदिनं सृष्टिरुत्पद्यते प्रतिरात्रि प्रलीयते च । भगवतो ब्रह्मदेवस्य रात्रावुपगतायां निम्नाः सप्तलोका ऊर्द्ध्वस्थितास्त्रयो लोकाश्च लयमुपगच्छन्ति, वैष्णव्यां निशायान्तु नीचैः सप्तभिर्लोकैः सार्द्धमूर्द्ध्वगाश्चत्वारो लोका विलयं व्रजन्ति । भगवतो रुद्रस्य रात्रौ चाधोलोकैः सममूर्द्ध्वस्थितपञ्चमलोकपर्यन्तं लीयते, रुद्रे लयमुपगते त्वशेषाणि चतुर्दशभुवनानि जगत्कारणे ईश्वरे विलीयन्ते । प्रथम-चरित्रे या सृष्टिर्वर्ण्यते सा किल ब्रह्माण्डस्यादिसृष्टिराचक्ष्यते, इत्थं त्रिदेवनि-शावसानसृष्टिवर्णनं तत्रास्ति । एकस्य भगवतो ब्रह्मदेवस्यायुर्यावन्नाना मनवः परिवर्त्यन्ते । ४३२०००० मानुषवर्षात्मको महायुगो युगचतुष्टयी वा जायते । एवंविधैकसप्ततिमहायुगानन्तरमेकस्य मनोः परिवर्त्तनं भवति एतदेव मन्व-न्तरमभिधीयते ।

अस्मात् कालपरिगणनक्रमाद् वर्त्तमाने मन्वन्तरे ब्रजभूम्यां श्रीजगदम्बा स्थूलरूपे पुनराविरभूत् । यथा द्वितीयचरित्रवर्णनप्रसङ्गे ब्रह्मचक्रतो देवलोके प्रादुर्बभूव तथैव श्रीभगवतः पूर्णावतारकृष्णचन्द्रस्य रक्षार्थं श्रीजगदम्बा ब्रजभूम्यामाविर्भूता । देववाण्या प्रबलमसुरावतारं कंसं विभीषयन्ती कृपामदर्शयत् । यथा च तृतीयचरित्रावसरे जगन्मातुः स्थूलं पीठं हिमालयोऽभूत् तथाऽत्र स्थूलपीठस्थानीयो विन्ध्याचलोऽवर्त्तिष्ट । द्वितीयशुम्भनिशुम्भवधं जगदम्बा स्वीयाधिदैवस्वरूपतः सूक्ष्मे दैवे लोके विधास्यति । यथा किल मधुकैटभवधो महिषासुरवधः प्रथमशुम्भनिशुम्भवधश्च प्राथमिकमेतत् चरित्रत्रयं सूक्ष्मदेवलोकमश्नुते तथैतत् चरित्रमुभाभ्यां देवमृत्युलोकाभ्यां साकं सम्बध्नाति । यतो द्वितीयशुम्भनिशुम्भवधो देवलोकेन सम्बध्यते भगवच्छ्रीकृष्णरक्षाकार्यं तु मृत्युलोकसम्बद्धमास्ते । श्रीजगदम्बाचरित्रविकाशेनैव भगवतः श्रीकृष्णस्य पूर्णावतारत्वं सिध्यति । इत्थमेवास्मिन् युगे विन्ध्याचलस्य सिद्धिप्रदायिका शक्तिरपि शास्त्रैः प्रमाणिता भवति ॥ ४०-४२ ॥

सर्वाण्येतानि चरित्राणि भविष्यति प्रादुर्भवितव्यानि मृत्युलोकसम्बन्धनीयानि च सन्ति ॥ ४३-५४ ॥

### श्रीजगदम्बाऽऽविर्भावकारणमाचष्टे ।

सृष्टिरूपिणि दृश्यप्रपञ्चे द्वयोरेव विद्याऽविद्यावैभवयोः स्वस्वाधिकारे नितान्तं प्रयोजनमास्ते । अविद्यावैभवो न भवेच्चेज्जीवसृष्टिर्न सम्भवेत्, भोग्यान लोकानामस्तित्वमपि न स्यात्, कर्मशृङ्खलाऽपि विनश्येत् । तथैवानुकम्पा विद्याया न भवेच्चेत्तर्हि मुक्तेस्तु का कथा, जनैरीश्वरसद्भावोऽपि विस्मर्य्येत । तस्मादेतदङ्गीकर्तव्यमेव यत् प्रकाशमन्तरेणाऽन्धकारस्याऽन्धकारं विना प्रकाशस्य च यथाऽस्तित्वं नाधिगन्तुं शक्यते, तथा द्वयोरधिकाररक्षणमावश्यकमुपजायते । इत्थं हि, प्राकृतिकक्रियासामञ्जस्यरक्षणाय ब्रह्माण्डस्य सुरक्षार्थं वा देवासुरयोः स्वस्वाधिकारेऽवस्थानमुचितं विद्यते । यदाऽसुरा देवाधिकारानपहरन्ति, तदैव प्रकृतिराज्येऽसामञ्जस्यसद्भावेन ब्रह्माण्डे विप्लवः सम्भवति । स च विप्लवो न केवलं स्वर्गलोके अपि तु पितृलोकमृत्युलोकादिष्वपि जायते, यतः सर्वेषामिन्द्रयमवरुणादीनामधिकारा अपह्रियन्ते । तेषामधिकारापहारेण मृत्युलोकेऽपि प्रकोप आसुरः समेधते । तदेवं जाते विप्लवे यदा सूक्ष्मराज्येऽसामञ्जस्यमुत्पद्यते तदा स्थूलेऽपि जगति जायतेऽसामञ्जस्यम्, तदैव जगदम्बाया आविर्भाव आवश्यको बोभूयते ॥ ५५ ॥

### द्विनवतितमाध्याये फलश्रुतेः सार्थक्यं समर्थयति ।

ब्रह्ममय्याः सर्वशक्तिमत्या भगवत्या जगदम्बिकायाः श्रीसप्तशतीगीतात्मकमलौकिकचरित्रं कथं मन्त्ररूपमस्ति कथं वा कलियुगे वैदिकमन्त्रतोऽप्यधिकशक्तिशालिनस्तदीया मन्त्रा वर्त्तन्ते, पूर्वमेवास्य दिग्दर्शनं किमपि कृतम्। श्रद्धालवः साधका एभिर्मन्त्रैः सर्वं लब्धुं क्षमन्ते। तस्मादुपर्य्युक्तफलश्रुतौ नास्ति कश्चित् संशयः। केवलं मन्त्रक्रियाद्रव्यशुद्धिसहितं साधनमत्रापेद्यते। यतः सिद्धेः श्रद्धैव मूलमन्त्रो विद्यते ॥ १–३० ॥

### व्यासतो यज्ञभागग्रहणविवेचनम् ।

यथाक्रममाकर्षणविकर्षणरूपयो रजस्तमसोर्यत्र समन्वयो भवति तत्रैव जगद्धारको विश्वरक्षकः सत्त्वगुण उदेति। तदेव स्थितिविधायकस्य भगवतो विष्णोरधिष्ठानपदं प्रणिधेयम्। यतः सत्त्वगुणप्रधानं धर्मस्वरूपमस्ति। यदा देवासुरशक्तिसमन्वयो जायते उभये वा देवासुराः स्वस्वस्थानेषु पदेषु च प्रतितिष्ठन्ति तदाऽभ्युत्थानं धर्मस्य सन्तिष्ठते। यदा किलासुराणां प्राबल्येन तत् सामञ्जस्यं नश्यति तदैव धर्मस्य ग्लानिर्जायते। देवानां विजये सञ्जाते धर्मविप्लवकारिणी शक्तिरासुरी विनष्टाऽभूत्। देवा असुराश्च स्वस्वलोकान् प्रत्यतिष्ठन्, ततो धर्माऽभ्युत्थानमजनि, तदा देवा यज्ञभागानलभन्त। धर्मयज्ञशब्दौ पर्यायवाचकौ स्तः। अधर्मनाशो, धर्मस्थितिः, सृष्टिसामञ्जस्यरक्षा, धर्माधर्मात्मककर्मणोः सदसद्गत्योः सुरक्षणमेव च यज्ञभागस्य स्वरूपमाध्यात्ममास्ते। मृत्युलोके पुरुषनारीप्रवृत्ति-निवृत्ति-साधारण-विशेष-वर्णाश्रमधर्मसदाचारादीनां सुरक्षया भगवद्देवादिदेवविष्णुप्रमुखाः सर्वे देवाः प्रसीदन्ति सम्बर्द्धन्ते च। एतदेव यज्ञभागलब्धेरधिदैवस्वरूपं वर्त्तते, श्रौतस्मार्तयज्ञसाहाय्येन देवानां मुखमग्निं द्वारीकृत्य देवलोके यज्ञभागसमासादनञ्च यज्ञभागस्याधिभूतस्वरूपमवगन्तव्यम् ॥ ३३ ॥

### त्रिनवतितमेऽध्याये महामायाया द्वन्द्वभावरहस्यनिर्देशः ।

या ब्रह्मशक्तिर्महामाया अघटितघटनापटीयसी सर्वशक्तिमयी च विद्यते। साऽविद्यारूपतो जीवान् मोहयति विद्यारूपतश्च जीवानां मोहमपनोदयति। तस्मादेकतो बन्धनमज्ञानमन्धकार आसुरी शक्तिरन्यतो यथाक्रमं मुक्तिर्ज्ञानं प्रकाशो दैवी शक्तिश्चेत्यादयो मिथोविरोधिभावाः सृष्टौ दृश्यन्ते। सप्तशतीगीतायाः प्रथमचरित्रे एकतो मधुकैटभौ मोहयित्वा तन्मुखतो वरदानविधानं द्वितीयतो भगवतो विष्णोः शरीरान्निःसृत्य तद्विनिद्रतासम्पादनञ्च महामायाया द्वन्द्वभावं परिचिनुतः ॥ २–४ ॥

## प्रतिमाबलिदानविमर्शः।

वेदशास्त्रैः षोडश दिव्यदेशा मन्यन्ते, तेष्वेवान्यतमो मूर्त्तिः प्रतिमा वा विद्यते। सर्वव्यापको जगत्पिता परमेश्वरः पुरुषरूपतः स्त्रीरूपतो वा समुपास्येत। सनातनधर्मावलम्बिन उपासका एष्वेव जलाग्निपटमूर्त्तिमण्डलयन्त्रहृदयमूर्द्धादिषु षोडशदिव्यदेशेष्वन्यतमं कञ्चिद्दिव्यदेशं पीठं निर्माय तमुपासते। तैर्मूर्त्तिर्नोपास्यते अपि तु मूर्त्तौ पीठत्वं परिकल्प्य उपासना विधीयते। यथा गवां सर्वशरीरजं पयः केवलं पयोधरादेव निस्सरति तथैव सर्वव्यापिकाऽपि चिन्मयी ब्रह्मशक्तिः दिव्यदेशेष्वेव प्रादुर्भवति। एतदेव मूर्त्तिपूजाया रहस्यं परमोपकारित्वं महत्त्वञ्च वर्त्तते। अत्र बलिदानविषयेऽपि शङ्का भवितुमर्हति, तस्मात् समाधीयते–उपासनानिमित्तं त्यागविशेषो बलिरभिधीयते। आध्यात्मिको बलिरात्मबलिर्वेद्यः, स्थूलसूक्ष्मसर्वस्वत्यागो बलेराधिदैवं रूपमवगन्तव्यम्। तथा च पशूनां बलिस्तदनुकल्पानां कूष्माण्डादीनां बलिरधिभूतबलिरुच्यते। मानवः प्रवृत्तिपारवश्यान्मांसादीन् जिघत्सति। एवंविधाधिकारिकृते पशुबलिर्विहितः। मध्यमाधिकारिनिमित्तमधिदैवबलिराम्नायते यथा किलाभ्यामुभाभ्यां कृतो बलिरथवा मानसपूजायां कामक्रोधादीनां यो बलिर्विधीयते। उत्तमाधिकारिणां कृते त्वाध्यात्मिको जैवाहङ्कारबलिरेव शास्त्रसम्मतः॥ १०–११॥

## ऐशगतिविवेचनम्।

ऐशगतेः समासतो वर्णनं पूर्वमेवायातम्। मनुष्यलोकस्य ये समुन्नता जीवाः कृष्णगतिचक्रमतिक्रान्ता द्वितीयत उन्नतवासनासद्भावेन परमोच्चदेवपदाधिकारिणो भवन्ति ते इत्थमिन्द्रमनुत्वादिदेवपदानि लभन्ते, क्रमशोऽग्रेसरन्तश्चैशगत्या मुक्तिमाप्नुवन्ति। पुण्यात्मा मनुष्यः साधारणतया भूर्भुवःस्वरादिलोकेषु स्वर्गीयं सुखं भुक्त्वा पुनर्गमनागमनचक्रवशतः क्षीणे पुण्ये मृत्युलोकं विशन्ति। इत्थं सामान्या कृष्णगतेरवस्था, ये तु जीवा उग्रतपस्याबलेनोन्नतदेवपदमधिकुर्वते तेषामेव गतिरैशगतिरुच्यते, प्रायश्च तेषां मृत्युलोके न पुनरावर्त्तनं भवति। सुरथो नृपतिरिमामेव गतिं लेभे। एष नृपो मनुपदमवाप्स्यमानः क्रमशः श्रीजगदम्बानुकम्पासद्भावादैशगत्या प्रतिपलमग्रेसरिष्यति। मानवानां कृते नास्ते सामान्या गतिरियम्। महाशक्तिशाली परमोग्रतपा उपासक एव श्रेयसीमेनां गतिं लब्धुमर्हति॥ २१–२२॥

## समाधिनाम्नो वैश्यस्य भाविभाग्यं प्रस्तूयते।

समाधिनाम्नो वैश्यस्य भविष्यत्कालोऽपि सातिशयं प्रशंसनीयो विद्यते। यद्यपि वैश्यवर्णस्तृतीयां श्रेणीमाश्रयते तस्मादर्थप्रधानधर्माणो वैश्या नैव मुक्तिमधिकुर्वते। परञ्च, स्वकीयैरुग्रतपस्त्यागोपासनाबलैः समाधिर्नाम वैश्य एकस्मिन्नेव जन्मन्येतादृशीमुच्चगतिमासादितवान्, या किल देवानामपि दुर्लभा, वर्णगुरुभिर्ब्राह्मणैरपि नास्ति सुलभा यतो ब्राह्मणाश्चतुर्थाश्रममवलम्बमाना आत्मज्ञानमधिकृत्यान्ते मुक्ता भवन्ति। पूर्वजन्मार्जितजात्यायुर्भोगलाभेन मनुष्यः कस्मिन्नपि वर्णे जन्म गृह्णीयात्, किन्तु कर्मोपासनातपोज्ञानार्जनादिभिरयं जन्मान्तरे यादृशमिच्छेत् तादृशमेव समुन्नताधिकारं प्राप्तुं प्रभवेत्। विशेषतो भक्तेरुपासनायाश्च दिव्यमहाशक्तेराश्रयेण न कस्यापि नैराश्यं सम्भवेत्। एव एव वेदशास्त्रसिद्धान्तः, एतदेव च वर्णाश्रमधर्मस्य सार्वभौमं परमोदारविज्ञानमास्ते। केवलं शरीरविमर्शात्तस्मिन् मनुष्यजन्मनि समाधिनामा वैश्यवरो वैश्यवर्णे जन्म गृहीत्वाऽपि प्रबलेन तपोबलेन ऐकान्तिकोपासनया च तादृशीं गतिमाप्तवान् या गतिर्देवानां भूदेवानामपि दुर्लभा वर्त्तते। उग्रकर्माणस्तपस्विनः सूर्यमण्डलं भित्त्वा शुक्लगत्या यन्निर्वाणपदमासादयन्ति ततोऽप्यधिकतरसुगमां सहजगतिं समाधिवैश्यो लब्धवान्। अस्मिन्नेव मृत्युलोके गुरोरनुकम्पया आत्मज्ञानलाभाद् जायते जीवन्मुक्तदशा, सैव सहजगतिराख्यायते। गतिमेतां लभमानस्यात्मारामजीवन्मुक्तस्य स्थूलशरीरपातानन्तरं न कुत्रापि गमनमावश्यकं जायते। जगन्मातुर्महामायायाः कृपैवात्र कारणायते॥ २३-२७॥

## सप्तशतीगीतानिष्कर्षः।

कलियुगे सप्तशतीगीता, सर्वोत्तमो मन्त्रग्रन्थः सर्वशक्तिप्रदः परमकल्याणसाधको गीताग्रन्थश्च विद्यते। अस्या गीतायाः प्रत्येकशब्दशक्तेः सत्यता नूनं वरीवर्त्ति। अस्यां मन्त्रगीतायां बहुधा विद्वांसो विशङ्कन्ते यदत्र गीतारम्भे "सावर्णिः सूर्यतनयो यो मनुः कथ्यतेऽष्टमः" ग्रन्थान्ते च "सूर्याज्जन्म समासाद्य सावर्णिर्भविता मनुः" इत्युक्तम्। इत्थं परस्परविरोधि वचनं विद्यते। एतादृग् मिथोविरुद्धं वचो नास्तिकानामास्तिकानामुभयेषां विदुषां चेतसि शङ्कां जनयते। वैदिकसिद्धान्तममन्यमानैराधिभौतिकदृष्टिसम्पन्नैः पण्डितैस्त्वेवं विधेषु वचनेषु स्वतः शङ्का विधीयते किन्तु श्रौतसिद्धान्तसमर्थकानामास्तिकानामपि विदुषां चित्ते मिथोविरुद्धमेतादृग् वचनजातं सातिशयं सन्देहमुत्पादयति, एष शङ्कासम्भवः स्वाभाविक एव। यतो दैवजगतः स्वरूपस्पष्टत्वादह-

स्यान्यवगन्तुं प्रभवतामन्तर्दृष्टिमतां तत्त्वदर्शिनां योगिराजवर्याणां सर्वदैवाऽभावो वोभूयते । विशेषतोऽस्मिन् घोरविकरालकलिकाले भूगोलग्रन्थस्य द्वित्राणि पत्राणि पठित्वा भूमानचित्रमवलोक्यैव च अर्वाचीना विद्वांस आत्मनो यथेष्टज्ञानिनः सृष्टिपारदर्शिनश्च मन्यन्ते । अत्र टीकाग्रन्थे बहुधारं व्याख्यातम् , यदनन्तब्रह्माण्डभाण्डोदर्या विश्वजनन्या महामायाया विराडुदरे भासमानेऽप्यनन्तकोटिब्रह्माण्डसमूहे केवलमस्माभिः स्वब्रह्माण्डस्य कियन्तमल्पीयांसमशमेवावगन्तुं शक्यते। अस्माकं ब्रह्माण्डे केवलमेकब्रह्माण्डचतुर्दशभागान्यतमैकभागस्य चतुर्थांशोऽयं मृत्युलोको विद्यते, तदन्ये सर्वे देवलोकाः सन्ति । यान् देवलोकान् न वयं स्थूलदृष्ट्या द्रष्टुं पारयामो न वाऽस्माकं स्थूला बुद्धिस्तेषामस्तित्वं ज्ञातुं प्रभवेत् । किन्त्वस्य ब्रह्माण्डस्य भूर्भुवरादिसप्तोर्ध्वलोकानामतलवितलादिसप्ताधोलोकानां तदवान्तरनानासूक्ष्मदिव्यलोकानाञ्च सद्भावः शास्त्रैः प्रमाणित आस्ते, दार्शनिकदिव्यदृष्ट्या दर्शनीयोऽपि विद्यते । तेषामेव दिव्यलोकानां प्रभावः तद्देवपदधारिणामाधिपत्यञ्चास्माकं स्थूले मृत्युलोके निरन्तरमापतति । यत्तु स्थूलदर्शिनः साधारणजनाः स्वाधिभौतिकदृष्ट्या नानुभवितुं क्षमन्ते । एतदेव कारणं यदस्मिन्नाधिभौतिकयुगे सूक्ष्मे दैवे राज्ये विश्वासो जनानामेकान्ततो नष्टः । यथार्थशिक्षाया अभाव एवात्र हेतुतामावहते । पूज्यपादमहर्षयो मुख्यतः शिक्षां त्रिधा व्यभजन् । एका शिल्पसम्बन्धिनी शिक्षा, द्वितीया पदार्थविद्या वैज्ञानिकी शिक्षा, तृतीया दार्शनिकी वैदिकी वा शिक्षा । प्रकृतेः स्थूलसाम्राज्यस्याङ्गानां प्रतिकल्पनं शिल्पमुदाहरन्ति । प्राकृतिकशक्तेरङ्गेष्वाधिपत्यस्थापनं पदार्थविद्या, विज्ञानशास्त्रं वा समाम्नायते। आन्तरिकराज्यस्य दैवसाम्राज्यस्य आत्माऽनात्मनोर्वा गतिं स्वरूपञ्च स्वानुभवाद्यलौकिकयोगदृष्ट्या या ज्ञापयितुं शक्नोति, सा दार्शनिकी शिक्षा बोध्या । पुरा भारतवर्षे एतास्त्रिविधाः शिक्षाः प्रचलिता आसन् । तत्रैतावानेव भेद आसीत् यत्तदा केवलजीवनयात्रानिर्वाहाय यावच्छिल्पशिक्षाया विज्ञानशिक्षाया वा प्रयोजनमासीत् तावत् कृत्वा तदवशिष्टः पुरुषार्थो दार्शनिकशिक्षायामेवायोजि । साम्प्रतं वैदिकी दार्शनिकी च शिक्षा प्रायो लुप्ताऽभवत् । अवशिष्टे शिक्षाद्वय एव सर्वेषां दृष्टिरापतिता । तस्मादाधुनिका विद्वज्जनाः सूक्ष्ममान्तरिकराज्यं दैवीं शृङ्खलां चैकान्ततो विस्मरन्ति । ततस्ते वेदपुराणस्वरूपाणां शास्त्रीयवचनानाञ्च सत्यतायां संशेरते । इति प्रथममेव प्रतिपादितम् यद्वयं सृष्टेस्तदीयदेवपदानाञ्चायुः कीदृङ् मन्यामहे । प्रतिमन्वन्तरं कीदृशो देवपदधारिणः परिवर्त्यन्ते किंविधं वाऽऽधिभौतिकमाधिदैविकमाध्यात्मिकं वा परिवर्त्तनं वोभवीति ।

यदैकमन्वन्तरादन्यस्मिन् मन्वन्तरे एतावत् परिवर्त्तनं जायते तदा कल्पकल्पान्तरेषु भगवद्ब्रह्मविष्णुशिवानां रात्रिन्दिनयोः कियत् परिवर्त्तनमेकस्मिन् ब्रह्माण्डे सम्भवेत्, एतन्मानवैः क्षुद्रबुद्ध्या नानुमीयेत ।

पुराणेषु या गाथा यानि चरित्राणि याश्च ऐतिहासिकघटना वर्ण्यन्ते, तासां सर्वासां मन्वन्तरीयाणां मन्वन्तरान्तरीयाणां कल्पान्तरीयाणां वा घटनानां यथासम्भवं स्वरूपं समाधिगम्यालौकिकप्रत्यक्षद्वारेणानुभूय त्रिकालदर्शिनो महर्षयो भगवान् वेदव्यासश्च लोककल्याणार्थमवोचन्। विषयोऽयमस्यां टीकायां बहुधा बहुवारं व्याख्यातः। इत्थं हि पुराणेषु प्रतिपादिता या देवानामवताराणां देवपदानां वा गाथाः प्राप्यन्ते ताः किल सृष्टिसम्बन्धेन नित्या वर्त्तन्ते। यथा, ब्रह्मपदादीनि नित्यानि तथैव इन्द्रमन्वादिपदान्यपि नित्यानि सन्ति। एवमेव अस्मिन्मृत्युलोके आविर्भूतरामकृष्णाद्यवताराणां सामयिकपदानि तथैवान्तर्जगत्यां गुरुदत्तात्रेयाद्यवतारपदानि च नित्यानि विद्यन्ते। इन्द्रादिनित्यपदानि सर्वदा नित्यरूपेण रामकृष्णाद्यवतारपदानि च नैमित्तिकसमयप्रादुर्भावविमर्शेन स्थायिपदानि निर्दिश्यन्ते। तथा हि, इन्द्रादिपदानि तु सर्वदैव नित्यानि सन्ति, यस्मिन् युगे च रामकृष्णाद्यवताराणां प्रादुर्भावस्य प्रयोजनमुपजायते तदा तेषां प्रादुर्भावो निश्चितोऽस्ति। तेनाधिदैवकारणेन तस्या एव दैव्याः श्रृंखलाया मर्यादया चतुर्दशमनूनां भूयोभूयो यथासमयमाविर्भावो नैसर्गिक एव। विभिन्नकालधर्मसंस्कारानुसारतस्तेषां चरित्रेषु सादृश्यसद्भावोऽपि निश्चीयतेस्म। एतेषु पदेष्वात्मानो नूनं परिवर्त्यन्ते; किन्तु कालघटनाप्रणालीपारवश्यात् कालसमष्टिसंस्कारयोगाच्च तत्पदधारिणामायुःप्रमाणे तज्जीवनघटनाचक्रे च सामञ्जस्यं सन्तिष्ठते। ततः सप्तशतीगीतायां द्विविधानां वचनानामुल्लेखनं न दूषणं जायते अपि तु भूषणमेव बोभूयते। अधिकन्तु दैवजगद्रहस्यप्रकाशकं विद्यते। एतद्विज्ञानप्रामाण्याद् अष्टममनुसावर्णिविषये यद्द्विधा व्याहृतम् तत् साम्प्रतमेव। प्रतिकल्पमष्टमनुस्तथैव दिशा प्रजायते यथा चतुर्दश मनवः पार्थक्येन प्रादुर्भवन्ति। मनुपदमेकमत्यन्तमहत्त्वपूर्णं देवपदमास्ते, तन्मनुपदं प्रतिकल्पं पृथक् पृथक् चतुर्दश समुन्नतात्मान ऐशकर्मप्रभावेणाभ्युदयमाप्नुवन्तो जगन्मातुः श्रीजगदम्बाया अनुकम्पयाऽधिकुर्वते, परन्तु तत् पदं तु नित्यमास्ते। द्वितीयतो यदा सृष्टिश्रृङ्खला नियमिता वर्त्तते तदैतादृशपदधारिणां जीवनयात्राऽपि यथाकालनियमं नियमिता बोभूयते। एतदेव कारणं यदष्टममनुसावर्णिसम्बन्धे 'अभूत्' 'भविष्यति' चेति शब्दद्वयं प्रयोक्तुं शक्यते, नात्र काचिदाश्चर्यमया वार्त्ता।

भगवता वेदव्यासेन यद्वैकस्याष्टमनोश्चरित्रं समाधिद्वारा प्रत्यक्षीकृतम् तदा सर्वेषामेवाष्टममनूनां चरित्राणि विलोकितानि, इत्यवधेयम्। यैर्वैदिकानां पौराणिकानाञ्च विख्यातव्यक्तीनां चरितावली न लौकिकी किन्त्वेवंविधाऽलौकिकी मंस्यते, तैः कदापि नैवात्र मोहः संशयो वा लप्स्यते। एतत्सिद्धान्तानुबन्धाद् यैर्मानवधर्मशास्त्रप्रणेता मनुर्मनुष्यलोकाधिपो नृपो मन्यते तैरपि नितान्तं भ्रमसागरे निमज्ज्यते। मानवधर्मशास्त्रकालस्य रक्षको नियामकश्च दैवलौकिकविशिष्टपदधारी देवताप्रेरणयाऽस्मिन् मृत्युलोके प्रादुर्बभूव, एष एव शास्त्रसिद्धान्तः। मन्वन्तरसमूहं जगन्मातुर्महामायायाश्चरितावलीञ्च प्रकाश्य मार्कण्डेयपुराणं धन्यं समजनि॥ २५-२८॥

## चतुर्नवतितमाध्याये प्रतिमन्वन्तरं व्यवहारवैचित्र्ये हेतुनिर्देशः।

मन्वन्तरं नाम दैवराज्ये नानापरिवर्त्तनकारकः कालो जायते। यथाऽस्मिन् मृत्युलोके सामान्यो जीवो मातृगर्भतो जायते, म्रियते च, परन्तु राज्ञां परिवर्त्तनकालविशेषे सभ्यतायाः सातिशयं नानाविधञ्च परिवर्त्तनमुपजायते। यथा किल, आर्यसभ्यताया मोहम्मदीयसभ्यताया रोमनसभ्यतायाः पाश्चात्यसभ्यतायाः चीनजापानाद्यनेकानार्यसभ्यतानां कालो विधिश्च विभिन्नो दृश्यते, तथैव प्रणिधेयं यत् प्रतिमन्वन्तरं मृत्युलोकदेवलोकयोः सभ्यतास्वरूपं तच्छृङ्खलाविधानं तच्छासनपद्धतिश्च सम्पूर्णं परिवर्तते। अस्मिन् मृत्युलोके एकद्वित्रिचतुःशतवर्षेषु सभ्यतासदाचारादीनां यादृक् परिवर्त्तनं लौकिकेतिहासे प्राप्यते तथैव दिशा प्रतिमन्वन्तरमेकब्रह्माण्डस्य सभ्यता सातिशयं परिवर्तते। एतदेव कारणं यत् प्रतिमन्वन्तरं भगवतो मनोः परिवर्त्तनेन साकं देवराजेन्द्रपदधारी तदन्ये महान्तो देवपदधारिण ऋषिपदधारिणः पितृपदधारिणश्च सर्वे परिवर्तन्ते। किञ्च, प्रतिमन्वन्तरं जीवानां शकयाचारज्ञानेषु दैवजागतिकशृङ्खलादौ च परिवर्त्तनमुपजायते। वस्तुतो वैदिकविज्ञानदिशा सभ्यतादिपरिवर्त्तनकाल एकमन्वन्तरं मन्यते। एतद् दुर्बोधं दैव्याः शृङ्खलाया रहस्यमवगन्तुं प्रमादग्रस्तमर्वाचीनं जगन्नैव शक्नुयात्। प्रत्येकमन्वन्तरेण सह यद्देवर्षिपितृसङ्घपरिवर्त्तनस्य वर्णनमुपलभ्यते, तत्तु स्पष्टमेव। देवाः कर्मचालका ऋषयो ज्ञानसञ्चालकाः पितरः स्थूलभूतसञ्चालकाः प्रतिमन्वन्तरं भवन्ति। उक्तपदधारिणां नीचैरनेके लघीयोदेवपदधारिणोऽपि भवन्ति, येषां वर्णनं पुराणेषु नावश्यकमुपजायते। एतद्वर्णनेन साकं बहूराजानो वर्ण्यन्ते तेऽपि दैवराज्यगोचरा राजानो विद्यन्ते। यथकस्मिन् साम्राज्ये सम्राट्, माण्डलिका नृपतयश्च-

पृथक् पृथक् भवन्ति। तथैव इन्द्रेण सह तेषां राज्ञां सम्बन्धो विज्ञेयः। उक्तानां दैवजगतिकानां देवर्षिपितॄणां राजपदधारिप्रमुखानाञ्च प्रेरणया मृत्युलोके कार्यं विधीयते। मृत्युलोके येषां शरीरेषु तेषां प्रेरणा कार्यं करोति ते पूर्वोक्तानां देवर्षिप्रभृतीनामवतारा भण्यन्ते। एषैव शृङ्खला दैवराज्यस्य, मन्वन्तरस्य संक्षिप्तं रहस्यमप्येतदेव। भगवतः कार्त्तिकेयस्य भाविन इन्द्रपदस्य रहस्यमेतदास्ते, यद् दैवजागतिककर्मशृङ्खलानुसारतस्तत्रापि पदोन्नतिर्जायते। सा च पदोन्नतिर्भगवतां ब्रह्मविष्णुशिवानां यावत् पदानि समुपैति। यथा पुराणेषु कुत्राप्यलेखि, यद् भगवानञ्जनीनन्दनो हनुमान् भावि भगवद्ब्रह्मपदमुपयास्यति ॥५-१०॥

## देवादीनां नैकनामविधाने विज्ञानविन्यासः।

एतत् पूर्वं सम्यगभिहितम्, यदस्माकमयं स्थूलो मृत्युलोकः सूक्ष्मं दैवलोकमाश्रित्य स्थैर्यमुपगच्छति, तथोन्नतिमवनतिञ्च लभमानः सृष्टिस्थितिलयैः सङ्गच्छते। अयमस्माकं स्थूलो मृत्युलोकः प्रतिब्रह्माण्डं चतुर्दशभागान्यतमैकभागस्य केवलश्चतुर्थांश आस्ते। मृत्युलोकातिरिक्ताः सर्वेऽवशिष्टा भागा देवलोका उच्यन्ते। तत्र नैकविधा देवर्षिपितृगणा असुरगणाश्च निवसन्ति, ते एतन्मृत्युलोकेन सार्द्धं दैवसम्बन्धोमपि स्थापयन्ति। देवलोकस्य येषां देवानां यावान् सम्बन्धोऽनेन मृत्युलोकेन सह साक्षाद्रूपतो वरीवर्त्ति, तेषामेव नामादयोऽत्र पुराणे प्रतिपाद्यन्ते स्म। सर्वाण्येतानि देवपदानि नित्यानि सन्ति। परन्तु तेषां देवपदानां सङ्ख्यास्तत्-पदधारिणश्च प्रतिमन्वन्तरं परिवर्तन्ते। कालनियामको राजा मनुरभिधीयते। एकं मन्वन्तरं कियन्मानवर्षात्मकं भवति, एतच्च पूर्वमेव व्याख्यातम्। प्रतिमन्वन्तरं यदा दैवी शृंखला परिवर्तते तदा सृष्टेर्बह्वोंऽशा देवराज्यस्य नैका व्यवस्था अपि परिवर्त्तनं प्राप्नुवन्ति। यदा कालनियामकस्य मनोः परिवर्त्तनं जायते तदा सृष्टिशृङ्खलारक्षणदक्षा देवपदधारिणोऽपि परिवर्तन्ते। ततः प्रतिमन्वन्तरं देवसङ्घः परिवर्तते। जाते च देवसङ्घपरिवर्त्तने सृष्टिक्रियानियन्ता देवराज इन्द्रोऽपि परिवर्तते। यदि प्रतिमन्वन्तरं ज्ञानतारतम्यं सम्भवेत् तदा तत्कालीनानाम् ऋषिपदधारिणामपि परिवर्त्तनं नूनं प्रतिपद्यते। तस्मादेव प्रतिमन्वन्तरीयाणां देवर्षिप्रमुखानां नामानि त्रिकालदर्शिना महर्षिणा भगवता व्यासेन समाधिनाऽवगत्यास्मिन् पुराणे निबद्धानि! मन्वन्तरज्ञानप्राप्तये सूत्ररूपतो भगवान् व्यासोऽस्मिन् पुराणे बहुतरमुल्लिलेख ॥११-३१॥

## पञ्चनवतितमाध्याये मुक्तिसाधननिर्देशः।

एक एव सर्वव्यापक आकाशो घटमठाकाशादि-नानानामानि बिभर्ति। वस्तुतस्त्वाकाश एक एवाऽद्वितीयो वर्त्तते। केवलैर्घटमठाद्युपाधिभिरयं पार्थक्यतः प्रतीयते। सर्वव्यापक आकाश इव एकोऽद्वितीय आत्मा सर्वत्र स्थितोऽपि सर्वतो निर्लिप्त आस्ते। तस्मात् प्रतिदेहं देही आत्मा निर्लिप्तोऽपि अज्ञानकारणाच्चिज्जडग्रन्थिरूपिणीं बन्धनदशामुपैति। देहिनां देहः सूक्ष्मः, स्थूलो वा भवेत् सर्वं एव प्रकृतिसञ्जात आस्ते, कर्मबन्धनमपि प्राकृतिकमस्ति। केवलाज्ञानकारणात् सर्वेषामेषां प्राकृतिकप्राणिनां सम्बन्धोऽन्तःकरणं निरूपयति। इत्थं स्वच्छ आत्मनि प्रकृतेराभाससम्बन्धाद् भ्रमजनिता बन्धनदशा समुदेति। कामनाकारणाद् वासनापारवश्याद् वा एतादृक् संस्कारसंग्रहो जायते। तथा हि, आत्मा निर्लिप्तो वर्त्तते, क्रिया यावत्यः प्रकृतौ सञ्जायन्ते, स्वयं स्वस्मिन् प्रकृतेरारोपणमज्ञानहेतु। यथा निर्लिप्त आकाशे घटमठाकाशादिरूपमाकाशविशेषत्वमुपजायते तथाऽज्ञानकरणात् सर्वव्यापकनिर्लिप्तात्मनो विशेषत्वप्रतीतेरन्तःकरणे चिज्जडग्रन्थिरूपो जीवभाव उदेति। एतदेव जीवस्य जीवत्वम्। द्वितीयतो जीवो यद् यत् कर्म कुरुते तत् किल शरीरेण मनसा, बुद्धया च विधत्ते। तन्निखिलकर्मसंस्कारो वासनासद्भावादन्तःकरणेऽङ्कितो बोभूयते। अयमेव वासनया सङ्गृहीतः संस्कारसमूहो वीजो भूत्वा यथासमयमङ्कुरमुत्पादयति। तदेवाङ्कुरजातं शरीर-शक्ति-प्रकृति-प्रवृत्ति-जात्यायुर्भोगसमूहानुत्पाद्य गमनागमनचक्रं द्रढ़यति, ज्ञानबलेन वासना-( कामना ) नाशात् बन्धनदशाऽपि स्वतः प्रणश्यति। अयमेव निःश्रेयसमार्गोदयोऽभिधीयते। आत्मज्ञानिनो महापुरुषास्तत्त्वज्ञानेन वासनां विनाश्य जीवन्मुक्तपदवीं लभन्ते। इत्थं हि भोगैः प्रारब्धं कर्म क्षीयते। तत्त्वज्ञानेन वासनाक्षये कर्मसम्बन्धो विरमति। द्वितीयतः प्रारब्धरूपेण यानि कर्माण्यङ्कुरितान्यभवन्, यैः किल शरीरशक्तिप्रकृतिप्रवृत्तिजात्यायुर्भोगाः सप्त पदार्थाः प्राप्यन्ते स्म, तानि प्रारब्धकर्माणि भोगतो नश्यन्ति। जीवन्मुक्तदशायां भोगतः प्रारब्धनाशो भवति तत्त्वज्ञानेन च सञ्चितक्रियमाणकर्मपाशबन्धनाच्छिरस्य महापुरुषो ब्रह्मरूप एव जायते॥ १३-१७॥

## पितृगणोपदेशसारांशनिर्देशाय सकामनिष्कामकर्मानुष्ठानगतिप्रदर्शनम्।

अज्ञानजननी अविद्या ज्ञानजननी विद्या च ब्रह्मप्रकृतेर्महामायाया द्वे स्वरूपे स्तः। या शक्तिरात्मज्ञानतत्त्वाज्जीवान् विमुखीकृत्य तदीयमज्ञानं विवर्द्धयति

साऽविद्याऽभिधीयते । या च शक्तिरात्मानमभिमुखीकृत्य जीवेभ्यो ज्ञानं प्रयच्छति, सा विद्या व्याचक्ष्यते । तस्माद्धि वासनापारवश्याद्विहितं कर्मानुष्ठानमविद्याकार्यमुच्यते । किन्तु, तदेव कर्मकाण्डजातं यदा वासनावैधुर्येण केवलं कर्त्तव्यबुद्ध्याऽनुष्ठीयते तदा तद्विद्याश्रितं समाम्नायते । ततः कर्मकाण्डो विद्यामविद्याञ्चाश्रयते । यदि प्रमादात् कर्मकाण्डमुत्सृज्य वर्णाश्रमोचितः कर्मकलापो न क्रियेत तदा जीवानां घोरपतनमुपजायते । किञ्च, सद्वासनयाऽनुष्ठीयमाने कर्मकाण्डे जीवानामभ्युदयो जायते, केवलया कर्त्तव्यबुद्ध्या क्रियमाणे कर्मकाण्डे तु जीवैर्निःश्रेयसपदमपि प्राप्यते । ब्रह्मशक्तिर्महामायैव जगतः सृष्टिस्थितिलयानां हेतुरास्ते । एतादृशो ब्रह्मशक्तिस्वरूपायाः सर्वशक्तिमय्या मातुरिव सर्वरक्षणदक्षाया जगदम्बिकायाः कश्चिद्भावः किमपि प्राकृतमङ्गं वा नामङ्गलकरमथवाहितसाधकं भवितुमर्हति । अत्रोदाह्रियते—यथा-गरलं स्वस्थानां मानवानां प्राणानपहरति तथैव पीडितानां प्राणिनां प्राणानपि पाति । तथैव दिशा अविद्या जीवानां बन्धनपतनयोर्हेतुभूताऽपि यथानियममनुसृता सैव तदीयाऽभ्युदयकारणमुपजायते । माता कदापि कुमाता न भवेत् । माता प्रत्येकदशायां कुपुत्रस्यापि कल्याणमेवाभिवाञ्छति । जगन्मातुर्भगवत्या महामायाया एवैकं रूपं विद्या, द्वितीयं रूपमविद्या च वर्त्तते । ततो विद्या ज्ञानं जनयन्ती जीवान् निजाङ्के उत्थाप्य तेषां नियमितमभ्युदयं विदधाना तान्निःश्रेयसभूमिं नयति । परन्तु, अविद्या जीवान्निजाङ्के नैवोत्थाप्य तान् ताडयन्ती चपेटयन्ती चाकृष्य निःसंशयमग्रेसरानेव विधत्ते । यथा सकाम-कर्म बन्धननिमित्तं विद्यते तथैव पापपुण्योभयकर्माणि बन्धनकारणानि भवन्ति । यथा च लौहमय्यः काञ्चनमय्यश्च द्विविधा एव श्रृङ्खला जीवान् बध्नीयुस्तथैव पापमयानि पुण्यमयानि च कर्माणि जीवान् बन्धनदशां नयन्ति । किन्तु सूक्ष्मविज्ञानेन कर्मपारदर्शिनो मुनयः किलैतत् समीक्षन्ते यत्, पुण्यकर्माणि जीवान् सारल्येनाभ्युदयाध्वानमानयन्ति, पापकर्माणि तु तान् प्रताड्य अभ्युन्नतेः सरलमार्गमभिलक्ष्यन्ति । पापिनोऽपि जीवा भूयोभूयः प्रेतनरकलोकयोरस्मिन् मृत्युलोके च दण्डभोगं भुञ्जानाः सावधाना भवन्ति । यथा कारागारं गता दण्डिता व्यक्तयः प्रायः पापकर्मतो बिभ्यति; तथैव पापफलभोगिनो जीवाः पुण्यंप्रति श्रद्दधति । एतत् किल पुण्यपापगतिरहस्यम् । एतावता सिध्यति, यदविद्याऽपि कृपामयी वर्त्तते । द्वितीयन्त एतदपि सिद्धम्, यत् कर्म यदि कर्त्तव्यबुद्ध्या क्रियेत तदा तत् कदाचिदपि बन्धनं नोत्पादयति, अपि तु निष्कामभावेनानुष्ठितं कर्म मोक्षद्वारमुद्घाटयति ।

तृतीयतो यदा जीवो जातु स्वकर्मकृन्नैव सन्तिष्ठेत तदा यदि मनुष्यो विहित-कर्माणि जह्यात् तर्हि बलादयमविहितं कर्म कुर्यात । यतः प्रकृतिरवश्यमनेन कार्यं कारयितुं प्रभवेत् । एवं खलु विहितं कर्म विहाय अविहितकर्मा-नुष्ठानेन तस्य अधःपतनं भवेत् । अयमेव पितृगणोपदेशसारांशः ॥१८-२५॥

## षण्णवतितमाध्याये नित्यनैमित्तिकपितृपूजाप्रयोजननिर्देशः ।

वैदिकमतावलम्बिनो जना एव पितृपूजायाः सम्यग् रहस्यमवगतवन्तः । लौकिकपितृभक्तिस्तु सर्वास्वनार्यजातिष्वपि प्रचलति । या मनुष्यजातिः पितृ-पूजां न करोति सा किल असभ्या मूढमतिर्जातिः परिगण्यते । किञ्च येषां देवलोकवास्तव्यानां देवपदधारिणां नित्यपितृणामर्यमादीनामवतारा अस्माकं पितृभूता उत्तमां सृष्टिमुत्पादयन्ति, तादृशां नित्यपितॄणां स्वरूपं तदीयं ज्ञानञ्च केवलं वेदमतानुयायिनां विदुषामेव विदितमास्ते । यथा दैवलोकवास्तव्या ऋषयो ज्ञानराज्यं सञ्चालयन्ति तत्रत्या देवाश्च कर्मराज्यं परिचालयन्ति, तथैव देव-लोकाधिवासिनो नित्यपितर आधिभौतिकं स्थूलभौतिकराज्यं सञ्चालयन्ति । तथा हि, देवगणा जीवान् मातृगर्भं नयन्ति, किन्तु तन्निवासगृहाणि एतानि स्थूलशरीराणि मातृगर्भे नित्यपितृगणैरेव निर्मीयन्ते, पवित्रकुलरक्षामपि नित्याः पितृगणा एव प्रकुर्वते । यदि किञ्चित्कारणवशात् स्त्रीव्यभिचारादिदोषतः काचिज्जारजा कुण्डगोलकादिसन्ततिः कस्मिंश्चित् पवित्रे कुले जायते तत् कुलं पितृभक्तं भवेच्चेत् तदा तज्जारजन्यजनस्य नाग्रे सन्ततिः सम्भवेत् । तदीय-स्थाने तु नित्यपितृकृपातः शुद्धरजोवीर्यसम्भवस्तस्य कुलस्यान्यः कश्चिज्ज-नोऽधिकृत्य तद्वंशविशुद्धतां रक्षति । उत्तमसन्तानप्राप्तिः पितृणामनुकम्पाम-पेक्षते । यतः शुद्धरजोवीर्यरक्षणं नित्यपितृणामनुग्रहेणैव सम्पद्यते । कस्यापि जनस्य स्वास्थ्यवीर्यसुरक्षणमनुग्रहात् पितॄणामेध सम्भवति । यस्मात् पितरः स्थूलभूतसञ्चालकाः सन्ति । स्थूलशरीरं स्थूलभूतानां परिणतिरास्ते । अत-एतदङ्गीकर्त्तव्यमेव यत् सर्वप्रथमं कृपा मानवजातौ पितृणामेव जायते । अत्रा-सामान्यकृपा पितृगणस्य । यथाऽहैतुकी कृपा मातॄणां निजात्मजेषु जायते तथैव मनुष्योपरि पितॄणामनुकम्पा निष्कारणमुपजायते । आर्यैः पितृगणा मन्यन्ते । पृथिव्यामनेकैरनार्यैस्तु पितॄणामस्तित्वमपि नाज्ञानादुररीक्रियते, तथापि पितृगणानामनुग्रहोऽनार्यजातावपि सन्तिष्ठते । पितृगणा मनुष्याणामेव भवन्ति अन्येषां मानवातिरिक्तचतुर्विधभूतसङ्घानां नैवासते । यतोऽन्यसर्वविधभूत-

सङ्घश्रेणीनां संरक्षकाः पृथक् पृथक् देवाः सन्ति । ते देवाः चतुर्विधभूत-सङ्घान् तेषां प्रकृतिपार्थक्यानुसारतः सञ्चालयन्तः प्रतिपलमग्रेसरान् प्रकुर्वते । विषयोऽयमन्यप्रकारेणापि विशदीक्रियते—मनुष्यातिरिक्ता उद्भिज्जस्वेदजा-ण्डजजरायुजभूतसङ्घाः स्वस्वमातृगर्भे वीर्यगर्भे वा एकप्रकारकमेव वपुराप्नु-वन्ति । तेषां कर्मवैचित्र्याभावात् शरीरवैचित्र्यमपि न जायते तस्मादेवंविधानां भूतसङ्घानां पितृसाहाय्यं नैवावश्यकं भवति । अत्र कैश्चिच्छङ्क्यते-यदनार्यजातिः कथं कीदृक् कियच्च पितृसाहाय्यं लभते, तत् समाधीयते—अनार्यजाति-र्यद्यपि नित्यपितॄन्नैव बुध्यते, किन्तु सा तदवतारात्मीयमातृपितृसेवां करोत्येव, द्वितीयतो निजाधिकारानुरूपं धर्माधर्मविचारमपि रक्षति सामान्यविचारानु-सारतो धर्मार्जनञ्च कुरुते । धर्मात्मकयज्ञसाधनेन यथा देवा ऋषयश्च प्रसीदन्ति तथा पितृगणोऽपि प्रसीदति । तस्मादनार्याणां रजोवीर्यवंशविशु-द्धतायां साहाय्यमकृत्वाऽपि नित्यपितरस्तेषां साधारण्येन साहाय्यं सुतरां विदधति । इत्थमेव पितृगणो यथा मनुष्याणां शरीरं कुलञ्च रक्षितुं साहाय्यं प्रयच्छति तथैव ऋतुप्रमुखैर्मानववासोपयोगिनः कालस्यापि साहाय्यं करोति । तथैव दिशा देशोन्नतयेऽपि साहाय्यं वितरति । यतः स्थूलशरीरवद् देशकाला-वपि मनुष्याणामाधिभौतिकं सौकर्यमसौकर्यं वा विदधाते । एतदेव कारणं यत् प्रतिमन्वन्तरं पितृपदं विभ्राणो देवगणोऽपि परिवर्त्तते । आर्यजातेः श्राद्ध-विज्ञानमतिगम्भीरं विद्यते । पितृगण एवाधिदैवो भूत्वा श्राद्धद्रव्यादिजातं भावरूपतो लोकलोकान्तरेषु जीवान् प्रापयति । यथा पदार्थविद्याया यन्त्र-विशेषेण त्वरितमेव सहस्रयोजनपर्यन्तं शब्दरूपे एकस्थानादन्यस्थानं व्रजतः, तथैवाधिदेवाः पितरः श्राद्धकर्त्तुरन्नपिण्डादिजातं लोकलोकान्तरं नयन्ति । यथा वेदैर्देवानां कृते 'स्वाहा' शब्दः प्रोच्यते तथैव पितॄणां निमित्तं 'स्वधा' शब्द उच्चार्यते । देवानामपि पितरः पृथ भवन्ति । यतस्तेषामप्याधिभौतिक-शुद्धिरस्माकीनचातुर्वर्ण्यरीत्या सर्वदा प्रयोजनीया जायते । महर्षिगणा आध्या-त्मकोन्नतिशीलसद्भावेन मनोमयं श्राद्धं कर्त्तुं प्रभवन्ति । एतावता मानस-पूजा सर्वोत्तमा श्रेयस्करी चाम्नायते । जितेन्द्रिया नैष्ठिकब्रह्मचारिणः पुत्रैषणा-राहित्येन यदात्मचिन्तनया समाहिता भवन्ति तदा तद्द्वारेण स्थूलशरीर-सम्बन्धसद्भावात् तदीया नैसर्गिकी पितृपूजा सम्पद्यते स्म । तस्मादेव शास्त्रे व्याख्यातम्, यद् ब्रह्मनिष्ठव्यक्तीनां चतुर्दशपुरुषाः स्वयमेव उद्भ्रियन्ते । तदीयपितृपितामहादयो यल्लोकान्तरात्तं प्रतीक्षन्ते यद्वा तादृङ्महा-पुरुषस्य मनो यम्प्रत्येति ततोऽसौ निसर्गतस्तत्समाहितान्तःकरणसाहाय्य-

माप्नोति। मनुष्याणामधिकारभेदाच्चपितरोऽपि पृथग्त्रिधा एव भवन्ति, यथा शूद्राणां पितरः सुकालीना उच्यन्ते। यत्र भगवान् धर्मराजो यमो राजा वर्त्तते तस्मिन्नेव पितृलोके नित्यपितरो निवसन्तीति शास्त्रसमुच्चयात्समधिकमवगम्यते। अत्र हेतुरयमेवास्ते यत्, येषां मोहः पुत्रकलत्रादिष्वधिकोऽवतिष्ठते ते सामान्यमनुष्याः सुखभोगाय पितृलोकं यावत् प्रायो व्रजन्ति, तस्मादेताद्दृक्प्रजासमन्वयाः पितरः पितृलोक एव निवसन्ति। किञ्च पितृगणनिवासश्चन्द्रलोकादारभ्य सूर्यलोकं यावत् सन्तिष्ठत इत्यपि प्रमीयते शास्त्रैः। हवनतर्पणपिण्डदानैर्यथा पितरस्तृप्यन्ति तथैव यथाशास्त्रविहितब्राह्मणभोजनैरपि पितरः सन्तुष्यन्ति, इत्यपि वेदशास्त्रैः प्रमाणीक्रियते। निमन्त्रितब्राह्मणशरीरेष्वभिनिविष्टा नित्या नैमित्तिकाश्च पितरः श्राद्धान्नमाददते, प्रमाणान्यस्य तु बहूनि शास्त्रेषूपलभ्यन्ते। ततो हि श्राद्धकर्मणि पवित्रान् विदुषो ब्राह्मणान् भोजयेदिति शास्त्रविधि रुपलभ्यते। अन्नेष्वपि यथा देवेभ्यस्तण्डुलान्नम् ऋषिभ्यश्च यवान्नं रोचते तथैव पितृभ्यस्तिलान्नमभिरोचते। एतदन्नप्रियत्वं विज्ञानानुमोदितमास्ते। पितॄणां नैकवर्गाः सन्ति। सृष्टौ ये समुन्नतजीववर्गा विविधैर्विशेषाधिकारैर्युज्यन्ते स्म तेषां पृथक् पृथगेव पितरो भवन्ति। देवा ऋषयश्च पितृभिरेव सुरक्ष्यन्ते। यतो मृत्युलोके आध्यात्मिकोन्नतिशीलाया मनुष्यजाते रक्षणं वर्णाश्रमधर्मैरेव जायते, वर्णाश्रमश्रृङ्खला किल दैवजगतोऽपि साहाय्यं प्रकुरुते! अतो ब्राह्मणक्षत्रियविशां शूद्राणाञ्च पार्थक्येन पितरो निर्द्दिश्यन्ते, शुद्धेषु चातुर्वर्ण्यकुलेषु च तेषामनुकम्पा नित्यं नियमितं बोभवीति। चतुर्णां वर्णानां पितृभिः पृथक् पृथक् चत्वारो रंगा भ्रियन्ते। या ऐश्योऽणिमादयः सिद्धयो योगिगणेऽवतारवृन्दे सिद्धपुरुषेषु च जगत्कल्याणसम्बन्धात्प्रादुर्भवन्ति तदाविर्भावो यथा देवाधीनस्तथैव पितृसादपि वर्त्तते। आधिभौतिकसिद्धयः पितृगणाधीना आधिदैविकसिद्धयो देवाधीना वेदशास्त्रज्ञानप्रकाशिकाऽऽध्यात्मिकसिद्धयश्च ऋषिगणाधीना, भवन्ति। एषैव दैवराज्यश्रृङ्खला वरीवर्त्ति। देवयोनिष्वपि दम्भदर्पादियुक्तेन्द्रियपरायणा विषयासक्ता सृष्टिरासुरी प्रोच्यते, केवलं पराहितरता सदा प्रमादयुक्ता इन्द्रियासक्ता च सृष्टी राक्षसी परिगण्यते। पैशाची भौती च सृष्टिः प्रेतसृष्टिरास्ते। पिशाचा भूतेभ्यो बलीयांसो भवन्ति। चत्वारोऽमी देवयोनयो विद्यन्ते। एते मृत्युलोकमभितोऽसुरलोके च निवसन्ति। नैकविधैषणायुक्तासु कामिप्रजासु प्रकोप एषां प्रायो बोभूयते। सन्तुष्टाः पितरोऽनायासमेताभ्यो दैवीभ्यो बाधाभ्यो निरन्तरं प्रजाः परिरक्षन्ति॥ १२-४८॥

**सप्तनवतितमाऽध्याये पितॄणां प्रसादाय विहितश्राद्धतर्पणादिवैदिक-कर्मानुष्ठानस्य सार्थक्यं प्रदर्शयति ।**

पूर्वमेव बहुवारमुक्तम्, यत् स्थूलं मृत्युलोकमिममपहाय चतुर्दशभुवनानामन्ये सर्वेऽप्यंशा दैवलोका उच्यन्ते । एकस्मिन् ब्रह्माण्डे दैवलोकानामधिकतमे सत्यपि बाहुल्ये अज्ञानपारवश्येन स्थूलदृष्टिसद्भावेन च मृत्युलोकेऽस्मिन् प्रायो नैव दैवजगतः प्रत्यक्षत्वमुपलभ्यते । कस्मिंश्चित् कल्पे कस्मिंश्चन मन्वन्तरे, कस्यापि मन्वन्तरस्य कतिपये विभागे वा मर्त्यदेवलोकयोः सम्बन्धः समेधते कुत्रचिद् ह्रसति च । सम्प्रत्येष सम्बन्धो नाशमुपगतः । तस्माद्देवर्षि-पितॄणां दर्शनस्य का कथा, तत्र विश्वसन्तो विद्वांसोऽपि साम्प्रतमल्पीयांसो दृश्यन्ते । अत्र जीवानां समष्टिकर्मैव कारणायते । प्रतिब्रह्माण्डं ये देवा आधिभौतिकमंशं रक्षन्ति चालयन्ति च ते पितरः प्रोच्यन्ते, तेषां नैके सङ्घाः पार्थक्येनावतिष्ठन्ते । यद्यपि तेषां घनिष्ठः सम्बन्धोऽस्मिन् मृत्युलोके वर्णाश्रम-शृङ्खलां मन्यमानासु रजोवीर्यशुद्धिसमन्वितास्वार्यप्रजास्वधिकमवतिष्ठते, किन्तु ते मनुष्यजातिमात्रे किल कृपालवो भवन्ति । द्वितीयतो देवासुरलोकयोराधिभौतिकसृष्टे रक्षकाश्चालकाश्च पितरः पृथक् पृथग् बोभूयन्ते । तस्मात् पितृमाहात्म्यं नितान्तमधिकायते । यतः सृष्टौ आधिभौतिकसम्बन्धः सर्वतोऽधिकं प्रयोजनीयो जायते । सर्वेष्वपि लोकेषु स्थूलशरीराण्यन्तरेण न भोगनिष्पत्तिर्भवितुमर्हति, सर्वलोकजातैः स्थूलशरीरैश्च सार्द्धं पितॄणां नित्यसम्बन्धो विद्यते तस्मात् स्तुतिप्रसङ्गे पितरो देवनायकत्वेनोपवर्णिताः । यद्यपि प्रतिब्रह्माण्डं ब्रह्मविष्णुशिवास्त्रय एवेश्वररूपाः सन्ति, किन्तु क्रियाशक्तिसम्बन्धविमर्शाद् भगवान् शिव ऋषिसङ्घस्य, भगवान् विष्णुर्देवसङ्घस्य, भगवान् ब्रह्मा च पितृसङ्घस्य प्रमुखो नेता समाम्नायते, तस्मात् पितरो ब्रह्मणः स्वरूपा व्याहृताः । एतत्तु पूर्वं बहुवारमभ्यधायि, यन्मनुपदाधिकारिणां जन्मवृत्तान्तो दैवलोकेन समं सम्बन्धनाति । यत्र कुत्रापि कस्यचिन्मनोर्यो हि पूर्वजन्मवृत्तान्तो व्याख्यायतेस्म तन्मृत्युलोकसम्बन्धेन वर्णनमारते । परन्त्वस्मिन् पुराणे सर्वे मनुजन्मवृत्तान्ताः प्रायो देवलोकघटना अवगन्तव्याः । ऋषिसमन्वयो ब्रह्मयज्ञो, देवतासम्बन्ध-गोचरो देवयज्ञः, सोमचयनवाजपेयादयः श्रौतयज्ञाः, रुद्रविष्णु-विश्वधारक-विश्वम्भरशक्तियागादयोऽनेके स्मार्त्तयज्ञाः शतचण्डीपाठादयो नानाविधास्तान्त्रिकाश्च यज्ञाः सन्ति । इत्थं हि पितृप्रसादप्रतिपत्तये नित्यपितृयज्ञो नित्य-नैमित्तिकश्राद्धतर्पणादयश्च नैके यज्ञा आसते । पितृसम्बर्द्धनविमर्शादेव यथाविधि विहितानां श्राद्धक्रियाणामेतावान् महिमा वर्णाश्रमधर्मावलम्बिन्या-

र्थगणे प्रचलितो दृश्यते । उच्चाधिकारिणो मानवगणस्य, देवपदप्रतिष्ठस्य जीववर्गस्य, आत्मज्ञाननिष्णातस्य सन्न्यासिसमूहस्य ज्ञानिवृन्दस्य वा संख्या नितान्तमल्पीयसी बोभवीति । ते तु स्वसामर्थ्यादभ्युदयनिःश्रेयसमार्गे स्वयमेवाग्रेसरन्ति, तस्मात्तत्कृते नैवान्यसाहाय्यमपेक्ष्यते । परन्तु सामान्यनरनारीनिमित्तं परलोकयात्राकाले प्रतिपदं दैवसाहाय्यमावश्यकीयमुपजायते । परलोकगामिन आत्मान एतादृशीं सहायतां पितृगणानुकम्पयैव प्राप्तुमीशते । पितरो महाशक्तिशालिनो देवा वर्त्तन्ते । तेषामनुग्रहादैहिक्यस्तिस्रो द्रव्यक्रियामन्त्रशक्तयः प्रेतासुरदेवलोकाद्यखिलदैवलोकानुपेत्य तत्र गतानस्मदीयपित्राद्यात्मीयप्रमुखान्नैमित्तिकपितृवर्गान् विपत्तेस्त्रायन्ते, तान् तर्पयन्ति, तेभ्यः शान्तिं प्रयच्छन्ति पुरोऽभ्युदयाय च साहाय्यं प्रकुर्वते । एवंविधायां श्राद्धक्रियायां श्राद्धकर्त्तुः श्रद्धैव प्राधान्यमश्नुते । क्रियाश्रद्धयोः सम्यक्सद्भावेनैव देवपदधारिणां पितॄणां साहाय्यं विशेषतो लभ्यते । तस्मादेव वैदिकं मतं मन्यमानास्वार्यप्रजासु नित्यनैमित्तिकश्राद्धकर्मणामेतावान् महिमा समाम्नायते । श्राद्धविज्ञानं विचारशक्त्या योगशक्त्या विज्ञानशक्त्या च सदा सर्वथा सर्वतः परिपूर्णमास्ते, केवलमश्रद्धालवो नास्तिकप्रजाः श्राद्धमहत्त्वं विस्मरन्ति । एवंविधो नित्यपितृरूपो देवगणो—यद्वर्णनमुपरिष्टात् स्तोत्रस्तोमे विहितं यदीयप्रसन्नताया अलौकिकं फलमपि तत्रैवोपन्यस्तम् , पितृयज्ञेन श्राद्धतर्पणाभ्याञ्च प्रसादमुपगच्छन्नसौ तस्मिन् स्तोत्रे वर्णितं फलं प्रयच्छत्येव, अधिकन्तु श्राद्धादिभिरस्माकीनाः परलोकमुपगता नैमित्तिकाः पितरो मातृपितृभ्रातृप्रभृत्यात्मीयादयो विशेषतः साहाय्यं, शान्तिमभ्युदयञ्च प्राप्नुवन्ति, नात्र कोऽपि संशयावसरः । अन्तर्दृष्टिसम्पन्ना योगिनोऽनुभवन्त्येतत् ॥ १—३७ ॥

## अष्टनवतितमेऽध्यायेऽप्सरोजन्मवैलक्षण्यरहस्यप्रतिपादनम् ।

नद्या अप्सरोनिःसरणं वरुणदेवाप्सरःसंयोगात् सन्ततेः सम्भव इत्यादयः सर्वे दैव्याः सृष्टेर्विषया वर्तन्ते, नास्त्यत्र सन्देहः । अप्सरसोऽपि देवयोनयो भवन्ति । देवीभिः सार्द्धमप्सरसामेतावानेव भवति भेदो यद् देव्यो देवानां शक्तयः सन्ति या च देवी यस्य देवस्य शक्तिरास्ते सा तस्मान्न कदापि पार्थक्यमुपैति । धर्मविचारतश्च ता देव्यः सत्यो भवन्ति । स्वस्वदेवे तन्मय्योऽपि जायन्ते परन्तु नाप्सरसो भवन्त्येतादृशः ता देवशक्तिशालिन्योपि परपुरुषगामिन्यो भवन्ति । किं बहुना, स्वर्गतात्मानः स्वर्गसुखभोगार्थमप्सरसो लभन्ते ।

नन्वेतौ द्वौ भेदौ स्वर्गीयस्त्रीसमाजस्य वर्गद्वयं व्याचक्षाते। अप्सरःप्रसूता सन्ततिः पार्थिवसृष्टिक्रमान्नैवोत्पद्यते। दैवी सृष्टिर्मर्त्यलोकवन्नैव कालमपेक्षते, तत्र शरीरबलान्मनोबलमधिकमुज्जृम्भते। तस्माद् दैवी सृष्टिस्त्वरितमुपजायते। ऐहिकवेश्यावृन्द इव नैवाप्सरोवर्गोऽपवित्रो भ्रष्टो वा बोभवीति। यतोऽयमप्सरोवर्गो दैव्या शक्त्या सममन्वेति ॥ ५-१० ॥

## नवनवतितमेऽध्याये ब्राह्मणवर्णस्याग्नेर्महत्त्वपरिचयः।

देवतास्वपि वर्णव्यवस्था विराजते। अग्निर्देवो ब्राह्मणो वर्णः, तस्मात् परमोच्चतमो देवो विद्यते। अग्नेरनेकान्याधिभौतिकस्वरूपाण्यासते। सर्वं इमे स्वरूपभेदाः क्रियाशक्त्योर्विभेदवैभवान्मन्यन्ते। स्थूलक्रियाशक्तिविमर्शादग्नेर्भूयोऽपि पृथक् पृथगनेके भेदा भवन्ति। स्थूलाग्नेर्भेदो यथा-वडवानलो दावानलः साधारणाग्निर्यज्ञाग्निरित्यादयः, वैद्युतिकाग्निर्जठराग्निरित्यादयोऽग्नेः सूक्ष्मभेदाः सन्ति। इत्थमेवाग्नेरधिदैवस्वरूपमवगन्तुमग्निलोकाधिदेवोऽग्निर्निश्चेव्यः। इत्थमग्नेरधिदैवाधिभूतस्वरूपयोर्दिग्दर्शनमकारि। अग्निदेवस्याध्यात्मस्वरूपं तु नितान्तगम्भीरविज्ञानोपेतमास्ते। अयमग्निरेव जगत्प्रतिष्ठानिदानमस्ति। तथा हि, प्रतिब्रह्माण्डमापरमाणु ग्रहोपग्रहपर्य्यन्तमसावग्निरेव सर्वशक्तिसमन्वयं विधाय जगत्प्रतिष्ठायाः कारणमुपजायते। यदैकपाषाणखण्डः प्रस्तरत्वमासस्तदाऽऽकर्षणशक्त्या प्रस्तरनिर्माणोपयोगिनः परमाणव आकृष्टा अभवन्, स च पाषाणखण्डो यदा लयमुपेष्यति तदा विकर्षणशक्त्या परमाणवस्ते विकृष्टा भविष्यन्ति, किन्तु पाषाणधर्मरक्षिणी तदीयास्तित्वनियामिका वा शक्तिरेवाकर्षणविकर्षणयोः समतां निभाल्य तत्पाषाणस्वरूपमभिरक्षति, तथैवानन्तग्रहोपग्रहीयाकर्षणविकर्षणसमन्वयसाधिका महाशक्तिर्जगत् प्रतिष्ठापयति। एवमेव जीवानामन्तःकरणेषु रागद्वेषरूपयोराकर्षणविकर्षणशक्त्योः समन्वयेन वृत्तिनिरोधे जाते स्वत आत्मा स्वस्वरूपमधितिष्ठति। तस्मात् स एवाग्निर्जगतः प्रतिष्ठा। वस्तुतस्तद्विधाग्नेः स्वरूपं वाङ्मनोबुद्ध्यगोचरमपि केवलं ज्ञानेन गम्यते। विश्वधारकोऽग्निः साधारणविशेषरूपाभ्यां साधारणविशेषधर्मावुपादधानः स्थावरजङ्गमात्मिकां सृष्टिं बिभर्ति। एतदेव तस्याग्नेरध्यात्मस्वरूपमवगन्तव्यम्। स्वरूपमग्नेर्ज्ञातुमेतदपि वक्तुं शक्यते तद् यथा सूर्यदेवो वाष्पराशिं स्वाभिमुखं नियमितमाकर्षति तथैव या महाशक्तिर्जीवमात्रं नित्यं नियमपूर्वकं ब्रह्मस्वरूपं प्रत्याकर्षति तदेव नाम तेजो विद्यते। तद्भगवत्तेजो हि नाम्नाऽग्निदेवोऽभिधीयते। तदेव तेजो रूपान्तरेण विश्वधारकधर्मशब्देन

व्याह्रियते। तदेवाग्निदेवस्याध्यात्मस्वरूपमवगन्तुञ्च सूत्ररूपमास्ते। अत्राध्यात्मविज्ञाने बुद्धिभेदो न भवेत्, तदुच्यते-जीवेभ्यो धर्माधर्मफलदातृत्वेन भगवान् यमो धर्मराज इत्याख्यायते, धारिकाया धर्मशक्तेर्नियामकत्वेन च भगवान् अग्निदेवः प्रोच्यते। जीवैः कर्मभिरेव शुभाशुभफलानि प्राप्यन्ते। पुण्यकर्म शुभदं पापकर्माशुभप्रदञ्च भवति। एते एव द्विविधे कर्मणी धर्माधर्मौ स्याताम्। मनुष्याणां समष्टिधर्मकार्यानुरूपमेव देशमङ्गलमुपजायते। तथा हि, धर्मयज्ञशब्दौ पर्यायवाचकावासाते। ततो यज्ञादुत्तमा वृष्टिर्देशे जायते। एतदेव यज्ञाद्वृष्टेः रहस्यम्। यज्ञस्यापि पुनरनेके भेदाः सन्ति, यथा—दानयज्ञस्तपोयज्ञः कर्मयज्ञो योगयज्ञो ज्ञानयज्ञो वैदिकयज्ञः, स्मार्त्तयज्ञः तान्त्रिकयज्ञादयश्च। यज्ञस्यैतावद्विस्तृतस्वरूपानुबन्धादनार्यदेशेष्वपि यज्ञ एव वृष्टेः कारणमवधेयम्। अग्निर्दैवता तां यज्ञशक्तिं देवलोकं नयते देवांश्च तर्पयति। वैदिकयज्ञे त्वग्निदेवस्य प्राधान्यं प्रत्यक्षमेवास्ते, अनया यज्ञशक्त्यैव सम्वर्द्धितो देवराज इन्द्रो निजैर्माण्डलिकशासकैर्यथायोग्यं पृथिव्यां प्रचुरां वृष्टिं कारयति। एतेन यज्ञालौकिकस्वरूपेण सममग्निदेवमुखस्यापि लोकोत्तरो विद्यते सम्बन्धः। श्रौतयज्ञेष्वाहुतयस्तन्मुख एव दीयन्ते। इत्थं हि देवानां पुरोहितो ब्राह्मणवर्णोऽग्निः सृष्टिमात्रस्य संरक्षकः प्रतिपालकः, सर्वमान्यश्च वर्त्तते। अग्निदेवस्य त्रीण्येतान्याध्यात्माधिदैवाधिभूतस्वरूपाणि पृथक्तया प्रणिधातुं पदार्थविद्याशक्तेर्योगशक्तेर्ज्ञानशक्तेश्च कीदृक् प्रयोजनं वरीवर्त्ति, तदुपर्युक्तविज्ञानतत्त्वैरस्मिन्नध्याये प्रस्तुताग्निस्तोत्रस्यातिचमत्कारपूर्णै रहस्यैश्च प्रमाणितं भवति। भगवतोऽग्नेर्मुखस्य सप्तानां जिह्वानाञ्च मौलिकविज्ञानस्यान्वेषणे कृते तदीया सर्वव्यापिका शक्तिः परिचीयते। एतत्स्तोत्रप्रतिपादितविज्ञान मननाद्वेदशास्त्रोक्तयज्ञानां गुरुत्वं किञ्चिन्मात्रमवबुध्यते। भगवतोऽग्निदेवस्य महिम्ना समं यज्ञसम्बन्धेन भस्मनस्तद्धारणस्य च महीयान् महिमा मह्यते। शास्त्रैरष्टविधस्नानानि प्रतिपादितानि। यथा-जलस्नानं मन्त्रस्नानं मानसस्नानं भस्मस्नानादिकञ्च। तत्र यज्ञशेषसम्बन्धाद् भस्मस्नानमहत्त्वमस्मिन् स्तोत्रे निगदितम्॥ १-७०॥

### शततमाध्याये पुनरपि तदेवाग्नेर्महत्त्वं प्रतिपादयति।

अग्निदेवस्याध्यात्माधिदैवाधिभूतस्वरूपाणां स्वातन्त्र्याद्दिग्दर्शनं पूर्वमेवाकारि। सम्प्रति यद्रूपमाविरभूत्, अन्तरदधाच्च, तत्तस्याधिदैवं रूपमस्ति। एतदेव पूर्णत्वं वैदिकविज्ञानस्य यत्, तत् किल त्रिभिरेभिर्विज्ञानैः प्रपूर्यते, तत्र च सूक्ष्मस्य दैवजगतः सत्यत्वं प्राधान्यञ्चाम्नायते स्म॥ २०-२५॥

## फलश्रुतौ शङ्कासमाधानम् ।

वेदानां पुराणादिशास्त्राणाञ्च फलश्रुतौ विविधाः शङ्काः समुत्पद्यन्ते । तत्समाधानसौकर्यार्थमुच्यते–नित्यशब्दब्रह्ममयो वेदस्तदाश्रयजन्याः समाधिभाषादिगोचराः शास्त्रीयशब्दाश्चान्तर्जगद्रूपिणा सूक्ष्मदैवराज्येन समं साक्षात् सम्बध्नन्ति । कार्यकारणसम्बन्धतस्तेषु दैवी शक्तिर्विराजते । तामेव दैवीं शक्तिमभिलक्ष्य रुचिप्रवर्द्धिनी फलश्रुतिराख्यायते ॥ २६-४५ ॥

## एकोत्तरशततमेऽध्याये भगवतः सूर्यदेवस्य त्रिविधस्वरूपवर्णनम् ।

भगवज्ज्योतिर्मयस्य सूर्यदेवस्य त्रिविधानि रूपाणि सन्ति । तज्ज्योतिः षोडशकलाभिः प्रपूर्यते । तासामेव षोडशकलानां वर्णनमुपरिष्टात्तदध्यात्मस्वरूपविवेचनायामागतम् । तेषां षोडशनामधेयानामध्ययनं भगवतः सूर्यदेवस्यैतदध्यात्मस्वरूपमिति विबोधयति । वेदानां पुराणशास्त्रादीनाञ्चैवंविधाध्यात्माधिदैवाधिभूतात्मिकाया विभिन्नवर्णनपद्धते रहस्यज्ञानाभावात् सामान्यपाठका विमुह्यन्ति । तस्मात् पूर्ववर्णितविज्ञानं ध्यायं ध्यायमनुशीलने वेदशास्त्राणामाकलितेऽनुकूलानां प्रतिकूलानां वा केषाञ्चिदपि जनानां विमूढतायास्तत्रावसरो नागमिष्यति । सूर्यदेवस्याधिदैवरूपविधानं तु बहुधा शास्त्रेषु प्राप्यते, तदीयाधिभूतरूपमपि प्रत्यक्षमेवास्ते । यत् किल स्थूलदृष्ट्या इन्द्रियगोचरमपि नानाविधानां शक्तीनां विभिन्नानामधिकाराणाञ्च क्रियाकलापैरनुभवनीयमस्ति, यत्तु दार्शनिकैरन्यप्रकारेण पदार्थविद्यानिष्णातैर्विज्ञैश्चान्यथा दृश्यते । उपर्युपवर्णिते सृष्टिप्रकरणे यदण्डोत्पत्तिर्वर्ण्यते स्म, सा प्रथमप्राकृतिकसृष्टिरवगन्तव्या । तथा ह्येकब्रह्माण्डमहाप्रलयानन्तरं यदा पुनस्तस्य ब्रह्माण्डस्य सृष्टिः सम्भवति तदादौ जगज्जनन्या महामायाया ब्रह्मप्रकृतेरनुकम्पया विकृष्टः परमाणुपुञ्ज एकत्राकृष्टस्तदादिमाण्डत्वेन परिणमति । तदेव सहस्रांशुसमप्रभं हैममण्डं ब्रह्माण्डगोलकमजनि । इमामेव दशां पदार्थविद्यावेदिनो बुधगणा जीवसृष्टेरनुपयोगिनः पृथिव्यादिवासस्थानस्यादिमामवस्थामाकलय्य वर्णयन्ति । शास्त्रेषु यो ब्रह्मविष्णुरुद्राणां जगदम्बायाश्च कालो वर्णितः, असौ जगदम्बाकालोऽस्या एव प्राकृतिकसृष्टेः क्षणं द्योतयति । इयं जीवोत्पत्तेः प्रागवस्था प्रणिधातव्या । इमामेवाऽवस्थां यावदधिगत्य पदार्थवादपरायणो दर्शनसमूहः परमाणोर्नित्यत्वमङ्गीकरोति । तत्पश्चाद् ब्रह्मा प्रादुर्भूय यां सृष्टिं करोति सा ब्राह्मी सृष्टिरभिधीयते । ततस्तृतीयायामवस्थायां प्रजापतयो देवा जायमाना यां सृष्टिं रचयन्ति, सा मानसी दैवा

या सृष्टिराख्यायते, चतुर्थ्यामवस्थायान्तु स्त्रीपुरुषसंयोगजन्या या सृष्टिरुत्पद्यते सा मैथुनी जैवी वा सृष्टिर्भण्यते । एतदेव सृष्टेरलौकिकं दुर्ज्ञेयश्च रहस्यमस्ति । अत्र सृष्टिप्रकरणे यः किलैकतो बहुरूपसम्भवक्रमो विद्यते, तस्मिन्नेव क्रमे त्रिगुणमयी ब्रह्मप्रकृतिः स्वसाम्यावस्थातो वैषम्यावस्थामधिगच्छति, तदा त्रयो गुणा युगपत् स्पन्दन्ते । यत्र स्पन्दस्तत्र कम्पनम्, यत्र कम्पनं तत्र शब्दः सम्भवति । अयं प्रकृतेः प्रथमस्पन्द एव ॐकार आस्ते । तस्मादसौ सूर्यदेवेन सम्बध्यते । निखिलसर्गाद्यावस्थासम्बद्धोऽपि यावज्ज्योतीरूपमयं ॐकारः सम्बध्नाति, एतावानेव सूर्यदेवसम्बन्धो ज्ञेयः । तज्ज्योतिःसम्बन्धिनः सप्त भेदाः सप्त रङ्गाः सन्ति, त एव च सूर्यदेवस्य सप्त अश्वा आम्नायन्ते । अत्र शङ्क्यते–भूलोकमारभ्य सप्त ऊर्द्ध्वलोका उत्तरोत्तरं स्थूलाः सन्तीति कथमादिष्टम् ? यतः प्रत्यक्षं भूलोक एव सर्वतः स्थूलो दृश्यते । तत्र समाधीयते–यत्राधिभौतिकी स्थूलता स्यात्तत्राध्यात्मिकी सूक्ष्मता नूनं सम्भवेत् , यथा जगत्यां स्थूलकायस्य मल्लस्य बुद्धिरल्पीयसी दृश्यते, तथैव यत्राधिभौतिकी सूक्ष्मता तत्राध्यात्मिकी स्थूलता भवत्येव । तथा हि, भूलोके आध्यात्मिकी सूक्ष्मता वर्त्तते सप्तमे ऊर्द्ध्वसत्यलोके च सर्वतोऽधिकाध्यात्मिकी स्थूलता विराजते । तस्मादत्र भूलोकमारभ्य सत्यलोकं यावत् सप्तानां लोकानामुत्तरोत्तरमेकतोऽपरलोकस्याधिकं स्थूलत्वमुपवर्णितम् "स्वभावोऽध्यात्ममुच्यते" इति गीतोक्तेः स्वभाव एवाध्यात्ममास्ते । तस्यामवस्थायां प्रकृतिर्नैव विकुरुते । तत्रत्यैव प्रकृतिर्विद्यानाम्नाऽभिधीयते, सैव ब्रह्म साक्षात्कारयति । एषैवावस्था स्वस्वरूपावस्था प्रणिधेया । ततः प्रथममध्यात्माधिदैवाधिभूतभावाः पश्चान्नानाभावाश्च प्रकाशन्ते । द्वैतदशेयमखिला बोध्या । यदा द्वैतदशा जायते तदा चिज्जडौ सदसतौ इत्यादिभेदभावा उत्पद्यन्ते, तत्र द्वैतप्रपञ्चे चान्तःकरणमासज्जते । तस्मिन् क्षणे सूर्यदेवस्याध्यात्मप्रकाशोऽन्तःकरणात्तिरोधत्ते । यस्मादविद्या सूर्यदेवमाच्छादयति, विद्या च तत्तेजोऽन्तःकरणमालोकयति । एतत्तेजोजागृतिनिमित्तमेव गायत्रीमन्त्रजपो गायत्र्या उपासना वा विधीयते । एतदेव गायत्रीजपरहस्यमस्ति । ब्रह्मप्रकृतेर्महामायाया विद्यारूपमेव वेदमाता गायत्री गीयते, सच्चिदानन्दमयब्रह्मणश्चाधिभौतिकी प्रकृतिरेव सूर्यदेवो वर्त्तते । तदेव ब्रह्मरूपमवधेयम् ॥ १—२७ ॥

द्व्युत्तरशततमेऽध्याये वेदोत्पत्तिविज्ञानं गायत्रीमन्त्रोपासनया सह विश्वज्योतिरादित्यदेवस्य सम्बन्धश्च निर्दिशति ।

वेदशास्त्रेषु ब्रह्माण्डमयं पिण्डमयं नादमयं बिन्दुमयमक्षरमयमिति पञ्चविधानि पुस्तकानि शब्दशास्त्रविचक्षणैर्व्याख्यातानि । तेष्वक्षरमयं पुस्तकं क्षणभङ्गुरं विद्यते, अवशिष्टान्यपि ब्रह्माण्डमयप्रमुखानि चत्वारि पुस्तकानि यथाकालं विनश्वराणि भवन्ति । किन्त्वेतानि चत्वारि पुस्तकानि दैवानि सन्ति, तस्माच्चिरस्थायित्वं भजन्ते । पुनरस्मिन् पुस्तकचतुष्टयेऽपि नादमय-पुस्तकमहत्त्वं सर्वतोऽतिशेते । वेदा अपि नादमयानि पुस्तकानि विद्यन्ते । चतुर्विधेषु दैवपुस्तकेषु ब्रह्माण्डपिण्डबिन्दुमयानि त्रीणि पुस्तकानि तु प्रेरणया-ऽन्तःकरणे भावरूपतः प्रादुर्भवन्ति । परन्तु नादमयवाग्रूपिणो वेदा न तथाऽऽ-विर्भवन्ति । सृष्ट्यादौ यथावद्वेदमन्त्रा ऋषीणामन्तःकरणे श्रूयन्ते, तस्मात्ते श्रुतयः प्रोच्यन्ते । एतदेव वेदानां सर्वोपरि महत्त्वमास्ते । उपर्युक्तवर्णने सृष्ट्यादौ ब्रह्मा वेदानाविर्भावयतीति व्याख्यानस्यापि स्वारस्यमिदमेव । प्रेता-दिसाधकं देवोपासकं वा व्यक्तिमात्रमेवानुभवति यत्, प्रेतभाषा देववाणी वा केवलं तेनैव श्रूयते येन समं प्रेतदेवयोः सम्बन्धः समजनि । यद्येकस्मिन् स्थाने दश मानवा युगपदेकत्रिताः सन्ति, तत्र कस्यचनैकस्य शरीरेण सह प्रेतसम्बन्धो भवेत्, तदा तेषु स एवैको जनः प्रेतवार्तामाकर्णयिष्यति येन सार्द्धं प्रेतस-म्बन्धो जातः । तच्छ्रवणमभ्यन्तर्जायते न बहिरतो नान्यः कश्चित्प्रेतवचस्तच्छ्रोतु-मर्हति । एवमेव यदा कुत्राप्युपासकमण्डले देववाणी श्रूयते तदा सा तस्यैव श्रवणगोचरतामापद्यते, यत्र दैवी कृपा सम्भवेत्, सा च देववाणी न बहिरपि त्वन्तर्निशम्येत । वेदाविर्भावं विज्ञातुमेतदेवोदाहरणं पर्याप्तमस्ति । येषामल्पा-भ्यन्तर्दृष्टिरास्ते ये च स्तोकमपि देवजगत्या समं सम्बध्नान्ति तेऽवश्यमेतद्रहस्य-मनुभवेयुः । सृष्टिप्रारम्भे यदा केवलं ब्रह्माण्डगोलकमुदभवत् तदा जैवी सृष्टि-र्नासीत्, सैव प्राकृतिकसृष्टिः सञ्ज्ञीयते । ततोऽनन्तकोटिब्रह्माण्डभाण्डोदरी ब्रह्मशक्तिर्महामाया प्रतिब्रह्माण्डं ब्रह्मविष्णुमहेशात्मिकां त्रिदेवमूर्तिं जनयामास । यदा भगवान् विष्णुर्योगनिद्रायामस्वाप्सीत्, भगवान् ब्रह्मा तन्नाभिकमलादा-विर्भूय सृष्टिक्रियायै जागृतवान्, भगवान् शिवश्च तच्छरीरयोर्व्याप्त आसीत्, तदा भगवता ब्रह्मदेवेन ज्ञानमयं तपस्तप्तम्, बहिर्ज्ञानं प्रत्याहृत्यान्तरेकतत्त्वे युक्तोऽभूदिति यावत् । तत् क्षणं भगवान् ब्रह्मा 'पूर्वकल्पे किमासीत्, इति सस्मार, एषैवावस्था 'यथापूर्वमकल्पयत्' इति श्रुत्या प्रतिपाद्यते । यदा भगवद्ब्रह्मणोऽन्तःकरणात् सृष्टिप्रवाहो बहिर्गन्तुमारेभे, तदा साम्या-वस्था प्रकृतिर्वैषम्यावस्थामाससाद, त्रयो गुणा युगपच्चकम्पिरे । यत्र कम्पनं तत्र शब्दः सम्भवेत् । अयमेव गुणत्रयसमस्पन्दजन्यो घोषः

प्रणव इत्युच्यते। शब्द आकाशतत्त्वगुणो वेद्यः। आकाशतत्त्वं सर्वतत्त्वेभ्यः सूक्ष्मो विद्यते। तत आदिसृष्टौ सर्वप्रथमं शब्दप्रादुर्भावो नैसर्गिकः। तस्मादेव सृष्टिप्रारम्भे प्रथमं शब्दाविर्भावो निर्दिष्टः। सोऽयमेकोऽद्वितीयः शब्दः स्फुरति। एष एव प्रणवो भगवतः स्वाभाविकं नाम वर्त्ततेतराम्। नामानन्तरं रूपप्रादुर्भावः स्वाभाविकः प्रणिधेयः। किं बहुना, यत्र नामधेयं तत्र रूपसद्भावोऽपि नैसर्गिकः। अतो यथा ब्रह्मप्रकृत्या समं प्रणवः सम्बध्नाति तथैव ब्रह्मज्योतिर्मार्तण्डेन सार्द्धं सम्बद्धमास्ते। सच्चिदानन्दब्रह्मणश्चिन्मयी सत्ता एव घनीभूता ज्योतीरूपमादधे। तेन ज्योतिषा वहिरन्तश्च प्रकाशितमभूत्। तदेवान्तर्जगत्यां ज्ञानाधारभूतं वहिर्जगत्यां सूर्यमण्डलश्च जातम्। एतदेव प्रकृतेः प्रणवस्य चित्सत्ताया भगवदादित्यस्य च समुत्पत्ते रहस्यम्। सर्गादौ यदा जैवसृष्टिः प्रारब्धाऽभूत्, ज्ञातृज्ञानज्ञेयरूपिणी त्रिपुटी च निरमायि, तदा सर्वप्रथमं भगवान् ब्रह्मा प्रणवमाकर्णयामास। ततः प्रणवात् पुनर्वेदा आविरभवन्। त एव वेदाः श्रुतिसंयोगाद् ऋषीणामन्तःकरणेषु प्रकाशिता ऋषिभिश्च सृष्टौ प्रचारिता अभवन्, तस्मिन्नेव समये च त्रिपुटीप्राकट्येन सह ज्योतिरपि समुदयत्। तत्कालीनं विश्वज्योतिरेव भगवान् आदित्यदेवो विद्यते। अयमेवादित्यदेवः सप्रणवगायत्रीमन्त्रेण गायत्र्युपासनायां गायत्रीरूपेणोपतिष्ठति। प्रणवयुक्तगायत्र्युपासना अस्या एव तेजोमय्या ब्रह्मसत्ताया उपासना वर्त्तते। गायत्र्युपास्तेर्वरीयसी नान्या काचिद् ब्रह्मोपासनाप्रणाली भवितुमर्हति। इदमेवादिमसृष्टौ शब्दरूपोत्पत्तेर्गूढतमं रहस्यम्, इयमेव सृष्टेरादिमाऽऽवस्था च। उपासकानामन्तःकरणमिमामेवाऽवस्थामासाद्य ब्रह्मसान्निध्यं समुपैति, नात्र सन्देहः। अस्मिन्नेव पुराणे आदित्यदेवस्योत्पत्तिरदितिदेव्याः सकाशादपि व्याख्याता, तत्र सन्देहो भवितुमर्हति। तत्र सुगमं समाधीयते—अत्रत्यमादित्याविर्भाववर्णनम् आदित्यस्याध्यात्मरूपं विवृणोति, अदितेरादित्यस्योत्पत्तिर्या प्रोक्ता सा तु तस्याधिदैवं रूपं प्रकाशयामास, यश्चादित्यो देवविशेषो वरीवर्त्ति ॥ १-२२ ॥

## त्रयोत्तरशततमाध्याये जलतत्त्वविवेचनम्।

अत्र यज्जलसृष्टिवर्णनमास्ते, न तत्तुरीयं जलतत्त्वमगन्तव्यम्, तत्तु सर्गादौ पूर्वकल्पसर्गसम्भवा सर्वकर्मकारणवारिरूपं जलं विद्यते। तथाहि, सर्गादौ पूर्वकल्पसर्गसम्भवा सर्वकर्मबीजात्मिका संस्कारराशिरविद्यत। सर्वतः प्रथममन्तःकरणरूप आकाशे ब्रह्माण्डस्य कारणवारिमयः संस्कारपुञ्जः प्रादुर्भवति। तस्मादेव पुञ्जीभूतसंस्कारसमूहबीजात् संसारवृत्ते जन्यते। तस्माज्जलमेतत् कारणवारि

प्रणिधेयम् । ज्योतिःप्रभावसन्निभादन्तःकरणसंयमक्रियाकलापात्ततोऽपनोदनमेव जलशोषणं ज्ञेयम् ॥ १-५ ॥

अस्मिन् अध्याये भगवतः सूर्यदेवस्य या स्तुतिर्निर्दिष्टा, तस्या रहस्यं भगवतः आदित्यदेवस्याध्यात्माधिदैवाधिभूतरूपाणामध्ययनात् सम्यग्ज्ञातं भविष्यतीति पूर्वमपि बहुवारमुक्तम् ॥ ६-१५ ॥

## चतुरधिकशततमाध्याये वर्णाश्रमविमर्शः ।

सृष्टेरादित एव वर्णाश्रमधर्मशृङ्खला निरमायि । यतो वर्णाश्रमनियमो नैसर्गिको विद्यते । तदीयं फलमाध्यात्मिकोन्नतिशीलाया मनुष्यजातेश्चिरजीवित्वमास्ते ॥ १—१० ॥

## ग्रहनक्षत्रादिगोचरस्तुतिं विशिनष्टि ।

अत्र स्तुतौ ग्रहनक्षत्राणाम् ऋतूनाञ्च यद् विवरणं विद्यते, तत् सर्वं भगवतः सूर्यदेवस्याधिभौतिकं स्वरूपं सम्बध्नाति । यत् स्थूलदर्शी पदार्थविद्यादक्षः पण्डितगणो ज्ञातुं शक्नोति । तदीयाधिदैवरूपमुपासकवृन्दः, तस्याध्यात्मरूपञ्च दार्शनिकयोगिगणो विज्ञातुं प्रभवति ॥ २१-२८ ॥

## पञ्चोत्तरशततमाध्याये सृष्टिविज्ञानवर्णनम् ।

सृष्टिप्रकरणरहस्यं नितान्तं निगूढमास्ते । द्वितीयतो वेदपुराणेष्वनेकाधारे सृष्टेर्मिश्रितभेदप्रतिपादिका पद्धतिरस्ति । अतः सृष्टिप्रकरणं परमं दुर्ज्ञेयं बोभवीति । मिश्रितवर्णने कारणमेतदेव यद्दुर्ज्ञेयं सृष्टिप्रकरणं तस्यैव ज्ञानगोचरीभवेत् यस्यान्तःकरणं समाधिभूमिमुपागच्छेत् । समाहितमेवान्तःकरणं वर्गीकर्त्तुं क्षमते, प्रथमं सृष्टेश्चत्वारो भेदाः सन्ति । तत्र प्राकृतिकसृष्टिरेका, या ब्रह्मदेवादपि पौर्विकी सृष्टिः । द्वितीया ब्राह्मी सृष्टिः, या भगवतो ब्रह्मणो जायते । तृतीया मानससृष्टिः, या प्रजापतिभिर्निर्मीयते । तुरीया वैजी सृष्टिः या मैथुनी सृष्टिः स्त्रीपुरुषसंयोगात् सम्भवति । एते सृष्टिप्रकरणस्य चत्वारः स्वतन्त्रस्तराः । द्वितीयतो जीवसृष्टिसम्भवसमये दैवी मानुषी चेति द्विविधा सृष्टिर्गाथारूपेण वर्ण्यतेस्म । तदा का दैवी का च मानवी सृष्टिरिति पार्थक्यं नैवोपपाद्यते । एतावताऽपि तस्यावबोधे भ्रमो भवति । उपरिष्टात् यत् किञ्चित् सृष्टिप्रकरणं प्रतिपादितम्, तत् सर्वं देवसृष्टिप्रकरणमवगन्तव्यम् । एतत् सृष्टिप्रकरणं लौकिकमनुष्यसृष्ट्या समं नैव सम्बध्नाति । अदितिकश्यपादिनामानि देवराज्याधिवासिव्यक्तीनां नामधेयानि प्रणिधेयानि । एतच्च बहुशो व्याहृतम्, यत् स्थूलो मृत्युलोकोऽयमेकब्रह्माण्डीयचतुर्दशविभागान्यतमवि-

भागस्य चतुर्थांशो विद्यते, अन्येऽवशिष्टाः सर्वे देवलोकाः सन्ति । ब्रह्माण्डे देवलोकस्यैव प्राधान्यम् । अयं स्थूलो मृत्युलोको देवलोकमाश्रयते, देवलोकेनैवायं सञ्चाल्यते सुरक्ष्यते च । नित्यपितृगणः स्थूलसूक्ष्मदेवगणः कर्मराज्यस्य ऋषिगणश्च ज्ञानराज्यस्य संरक्षको वर्त्तते । अस्मिन् मृत्युलोके कर्मदूषका असुरप्रवृत्तिविधायकाश्चासुरा विद्यन्ते । अयन्तु मानवपिण्डविषयः । द्वितीयतो ये सहजपिण्डमया उद्भिज्जस्वेदजाण्डजजरायुजानां वर्गा वर्त्तन्ते, तच्चतुष्टये प्रत्येकवर्गस्य सञ्चालको रक्षकश्चैकैकोऽधिदेवः पृथक् पृथगेवास्ते । एतन्निखिलनियमनिबन्धनाय या सर्वतः प्राथमिकी दैवी सृष्टिरभूत् तस्यैव संक्षेपतो वर्णनमस्मिन्नध्याये विहितम् । देवासुरसङ्गरं यन्मानवपिण्डे निरन्तरमुपजायते नैमित्तिकरूपेण यथासमयं देवलोकेऽपि बोभूयते, तस्य व्यासतो वर्णनं विशेषत एककल्पीयवर्णनञ्च सप्तशतीगीतायां पूर्वमेवायातम् ॥ १-१० ॥

## षड्त्तरशततमाध्याये सावर्णिकमनुजन्मकथाद्वैधविचारः ।

एषा या सावर्णिकमनोर्जन्मकथा छायासूर्ययोः सम्बन्धेन भणिता, सा तस्य परजन्मीया प्रणिधेया, देवलोकस्य च कथेयमवगन्तव्या, या च सप्तशतीगीतायां कथिता कथा सा तत्पूर्वजन्मनो मृत्युलोकस्य च गाथा ज्ञेया ॥६-१२॥

## यमुनायमादीनामधिदैवभावप्रदर्शनम् ।

अस्मिन् स्थले यमुना, यमः, सावर्णिर्मनुः, वैवस्वतो मनुः, शनैश्चरः तापती च ते सर्वे अधिदैवभावेन युज्यन्ते स्म । एते सर्वे देवा एता देव्यश्च वर्त्तन्ते । तथा हि, यमुनाया नद्या अधिष्ठात्री देवी, शनैश्चरग्रहस्य चाधिदैवश्चेत्यादि । एतेषामध्यात्माधिभूतरूपाण्यन्यान्येवासते ॥ १३-१५ ॥

## वैदिकीं पौराणिकीं च वर्णनशैलीं विशिनष्टि ।

यथा पौराणिकी समाधिभाषा, लौकिकभाषा, परकीयभाषा च सामान्यबुद्ध्यापि ज्ञातुं शक्या, न तथा भाषाणां भावत्रयमवगन्तुं शक्यते । यस्मादेकतो निगूढतमभावानां ज्ञानमेव नितान्तं दुर्घटम्, द्वितीयतो वेदपुराणानामियं पद्धतिरास्ते यत्तेष्वाध्यात्माधिदैवाधिभूतभावत्रयस्य प्रायः सम्मिलितं वर्णनमवतिष्ठते । तस्मादेतादृशी शैली कदाचिदसम्बद्धा प्रतीयते कदाचन ज्ञातुमशक्या च बोभूयते । ये किल वैदिकदर्शनशास्त्रेषु परिपक्वबुद्धयो वर्त्तन्ते ये वा समाधौ सन्तिष्ठन्ते स्म, एतादृशाः तत्त्वज्ञा विद्वांस एव एवंविधां सम्मिलितां त्रिभावात्मकवर्णनशैलीं वशीकर्त्तुं क्षमन्ते । उपरिष्टाद् या वर्णनपद्धतिः प्रतिपादिता साधिदैवभावेन युक्ताऽऽसीत्, इयञ्चाधिभूतभावेनोप-

युज्यते । उपर्युक्तवर्णनेनोपासकानाम् एतद्वर्णनेन च वैज्ञानिकबुधजनानां लाभो भवितुमर्हति ॥ ४०-४१ ॥

## सप्तोत्तरशततमाध्याये भगवतः सूर्यदेवस्य त्रिविधभावप्रदर्शनम् ।

अत्र भगवतः सूर्यदेवस्य सहस्रकलानामुल्लेखः प्रथममास्ते । एतास्तस्याध्यात्मरूपस्य कलाः । यस्याध्यात्मरूपस्य दिग्दर्शनं पूर्वमकारि । अदितिगर्भे तदेककला निविष्टा, साऽधिदैवरूपेण सम्बध्यते । ततस्तस्य षोडशांशो योऽधुना व्याहृतः, स च सूर्यगोलकस्थिताधिभूतरूपेण सह सम्बद्धोऽस्ति । येन तिसृणां भूमीनां तारतम्यमभिलक्ष्यते श्रीसूर्यभगवतो यथार्थक्रममवगन्तुं च साहाय्यं मिलति ॥ १–६ ॥

## नवोत्तरशततमाध्याये पुराणे मिश्रितेतिहासप्रदर्शनम् ।

पुराणशास्त्रे त्रिविधभाषाभाववर्णनेन सह कल्पकल्पान्तरीयदेवमृत्युलोकेतिहासयोरपि सम्मिलितवर्णनमुपलभ्यते, एतत् पुराणपाठकैरवश्यं प्रणिधेयम् । श्रीसूर्यदेवसन्ततिवर्णनं देवलोकेन समं सम्बध्नाति, अत्राध्याये च महाराजराज्यवर्द्धनेतिहास ऐहलौकिको वर्त्तते इत्यमत्रबोद्धव्यम् ॥ ३०-३७ ॥

## सूर्यस्तुतिरहस्यबोधनप्रकारः ।

भगवतो भास्करदेवस्याध्यात्माधिदैवाधिभूतरूपाणां पार्थक्यतो व० नं पूर्वमायातम् । तद्रूपत्रयं प्रणिधाय अस्याः सूर्यस्तुतेर्मननाद्रहस्यमस्याः सम्यगवगम्येत । यतोऽत्र स्तुतौ त्रिविधरूपाण्यभिलक्षितानि ॥ ६६–७३ ॥

## दशोत्तरशततमाध्याये भगवत्सूर्यदेवचरित्रपाठफलश्रुतेर्विज्ञानम् ।

मूर्त्तिपूजाया देवमन्दिरप्रतिष्ठादेनाश्चाधिदैवविज्ञानमतिगम्भीररहस्यैः प्रपूर्यते स्म । तस्मादत्र भगवत्सूर्यदेवचरित्रपाठस्य फलश्रुतौ एतादृग् माहात्म्यमुदीरितम् यत्, यत्रैतच्चरित्रं पठिष्यते, तत्र भगवान् सूर्यदेवो निरन्तरं निवत्स्यति । देवमन्दिराणां शुद्ध्यशुद्धिविवेको नितान्तगम्भीरेणाधिदैवविज्ञानेन परिपूर्ण आस्ते । तथाहि, सनातनधर्मावलम्बिनः प्रस्तर-प्रतिमायन्त्रजलवह्निप्रभृतीनां जड़पदार्थानां समर्चनं ते न कुर्वन्ति, ते किल दिव्यदेशेष्वधिदैवपीठस्थापनपुरस्सरं दैवीं शक्तिं पूजयन्ति । अयं मृत्युलोक एकब्रह्माण्डीयचतुर्दशविभागानामेकतमविभागस्य तुरीयांशो विद्यते । प्राणमयः कोषो हि अन्नमयं स्थूलशरीरं परित्यज्य मनोमयविज्ञानमयानन्दमयाख्यैस्त्रिभिरपरैः कोषैः सह परलोकं गच्छति । तस्माल्लोके लोका वदन्ति,यदस्य प्राणा निस्सृता इति । अतः प्राणमयः कोष एव स्थूलं राज्यं, सूक्ष्मं दैवं राज्यं च परस्परं मेलयितुं विघट्टयितुं

वा प्रभवति । तस्यैव प्राणमयस्य कोषस्य सहायतया सर्वव्यापकस्य महाप्राणस्य सहयोगितया च मूर्तियन्त्रादिषु अधिदैवपीठस्थापना विधीयते, यत्राधिदैवपीठेऽस्माभिः सर्वव्यापकस्य भगवतः परमात्मनः देवदेवीनाञ्च पूजनं क्रियते, एतदेव मूर्त्तिपूजारहस्यम् । मूर्त्यादौ प्राणप्रतिष्ठाविधेर्या पद्धतिः शास्त्रीया समुपलभ्यते तदवगमेनैव एतद्विज्ञानरहस्यमनुभूयेत । भूतशुद्धिपूर्वकं स्वस्मिन् शरीरे देवतामाहूय तत्प्रतिष्ठा मूर्त्तौ विधीयते । एतदेव कारणं यत्प्रतिष्ठितविग्रहे प्रतिष्ठातुः सद्भावसंस्कारौ सन्तिष्ठेते । तस्मादेव शूद्रप्रतिष्ठितदेवमूर्त्तिं ब्राह्मणो न नमेत् । एतावता ब्राह्मणस्य काऽपि क्षतिर्नजायते शूद्रप्रतिष्ठितपीठस्यैव हानिः सम्भवति, यत्र स्वतन्त्रा दैवी कला पीठरूपेणावतिष्ठते. सैव कला ह्रसते । अतो यस्मिन् देवालये यादृक् संस्कारो यादृशी मर्यादा यादृशः शुद्ध्यशुद्धिविवेकश्चिरात्प्रचलति, तत्प्रतीपाचरणेन पीठशक्तिः क्षीयते ह्रासमुपैति वा । नैतावता केवलं पूजकस्य पीठशक्तेर्वा हानिः सम्पद्यते । अपितु पीठापमानकर्त्तुर्देवमन्दिराशुद्धिकारकस्यापि क्षतिरुपजायते । यस्य वर्णनं निगमागमेषु समुपलभ्यते, सोऽयं शुद्धाशुद्धविवेकः काल्पनिको न विद्यते, सनातनेषु वैदिक-दर्शनेषु निर्णीतम्, यदिदं स्पृश्यास्पृश्यालोचनं पञ्चभिः कोषैः सम्बध्यते, यैः पञ्चभि; कोषैरात्मा आच्छाद्यते । एतद्विज्ञानं नितान्तं गभीरमस्ति, किन्तु सङ्क्षेपेणैतदुक्तुं शक्यते यत्, एषु पञ्चसु कोषेषु शुद्ध्यशुद्ध्योः स्पर्शास्पर्शयोर्वा सदसच्च फलमुत्पद्यते । दर्शनशास्त्रे यथाक्रममन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमयकोषगोचराण्यसत्फलानि मलविकारविक्षेपावरणास्मितापदैरुच्यन्ते ।

तस्मादेव स्पर्शदोषदुष्टायां देवमूर्त्तौ तत्पीठशुद्ध्यै अभिषेकादिविधिर्निर्दिष्टः । सर्वाणि विधानान्यधिदैवविज्ञानमूलकानि सन्ति । अतः, अस्पृश्यस्पर्शदोषेण दैवजगतः आविर्भूतशक्तेस्तिरोभावः क्वचित् तन्न्यूनता नूनं सम्भवेत, एतत् स्वतः सिध्यति ।

यथा विष्ठादिभिरन्नमयकोषो दूष्यते तथैव दैवपीठसम्बन्धेन प्राणमयः कोषः कलुषितो भवति, एवमेव जननमरणाद्याशौचानां सूर्यचन्द्रोपरागाशौचस्यापि प्रभावो मनोमयकोषमावृणोति । इत्थमन्यान्यशुद्ध्यशुद्धिविवेकोऽपराभ्यां कोषाभ्यां सम्बध्नाति, एतन्मीमांसाशास्त्रेण सिध्यते । तस्मात्सूक्ष्मदैवराज्यपर्यालोचनां विना अन्तर्जगद्दर्शकस्य दर्शनशास्त्रसमूहस्य श्रवणमननादिमन्तरेण च नैतादृग् गहनविषयो ज्ञानगोचरीभवति । एतदधिदैवविज्ञानमनुसृत्य यस्मिन् देवमन्दिरे शुद्ध्यशुद्धिविवेकं स्पर्शास्पर्शविचारञ्च पूर्णं निभाल्य;

उपर्युक्तसूर्यमाहात्म्यसंस्कारो नित्यं कस्मिंश्चिद्देवमन्दिरपीठेऽङ्कितो विधीयेत तदा तद्देवपीठं तत्पवित्रसंस्कारविशेषप्रभावेण यथेच्छमिष्टोपयोगिता लब्धुं शक्यते ॥ १-४३ ॥

## एकादशोत्तरशततमाध्याये पुराणपाठे प्रयोजनीयविषयविवेचनम् ।

पुराणशास्त्रे या ऐतिहासिक्यो गाथा गीयन्ते, यच्च वंशवर्णनं वंश्यानां चरितं वा समुदीर्यते, तत्सर्वमवगन्तुमवगमयितुं वा पुराणपाठकाः पुराणवक्तारश्च पूर्वोक्तं समाधि-लौकिक-परकीयभाषात्रयमध्यात्माधिदैवाधिभूतवर्णनत्रितयं चैतान् षड्विषयांस्तत्सिद्धान्तांश्च प्रतिक्षणं स्मरेयुः, तथैव एतदपि तैरवश्यं प्रणिधेयं यत्, पौराणिकगाथेतिहासेषु दैवी सृष्टिर्मानवी च सृष्टिः सम्मिलिता वर्ण्यते। अत्रायं मुख्यो हेतुर्यत्, वैदिकविज्ञानं सूक्ष्मं दैवं जगन्मुख्यं स्थूलमेतं मृत्युलोकञ्च गौणं प्रतिपादयति। दैव्या जगत्या आश्रयेणैव अस्य मृत्युलोकस्य सर्वाणि कार्याणि प्रसरन्ति। वस्तुतः सनातनधर्मिणां निखिलं कार्यकदम्बमखिलं चिन्ताचक्रं च दैवजगतः प्रधानत्वमङ्गीकृत्यैव प्रचार्यते। किञ्च, वर्णाश्रमधर्मिहिन्दुप्रजानां गमनं भ्रमणमुत्थानमवस्थानं चिन्तनं मननं शारीरिक-मानसिक-बौद्धिक-क्रियाश्च, इत्यादि यत् किञ्चिद् बोभवीति तत् सर्वं दैवं जगन्मुख्यं मत्वैव सम्पद्यते। तस्मादेव पृथिव्या अन्यशिक्षितजातयःसनातनधर्मस्य आचारव्यवहारौ चिन्ताप्रणालीञ्च सम्यगवगन्तुं नेशते। तैस्तत्सर्वमाचारादिकमनुपयुक्तमसत्यञ्च मन्यते। द्वितीयतः पुराणगाथाया नितान्तं दुर्बोधत्वे एतदपि कारणं विद्यते यन्मृत्युलोकस्य कल्पकल्पान्तरीयगाथेतिहासवर्णनैः सह वेदेषु पुराणेषु च मृत्युदेवलोकयोर्मिथोमिश्रितं सम्बन्धगोचरं वा वर्णनमुपजायते। तस्मादाधिभौतिकदृष्टयो जना अत्र विमुह्यन्ति। तथा हि, त्रिकालदर्शिनां पूज्यपादमहर्षीणां समाधिसुलभज्ञानचक्षुरग्रे सूक्ष्मो दैवलोकः स्थूलो मृत्युलोकश्च समं दृश्यते। यथा स्वगृहस्थिता वयं गेहाकाशं तद्बहिर्भूतमहाकाशञ्च सम्यगीक्षितुं शक्नुमः। शङ्कां समाधातुमत्र किञ्चिदुदाह्रियते—यदा शास्त्रेषु क्षत्रियाणां सूर्यचन्द्रवंशौ वर्ण्येते तद्वर्णनेन साकं मृत्युलोकस्य लौकिकराजवंशानामपि सम्मिलितं वर्णनमुपलभ्यते, तत्रेत्थं प्रणिधेयं यत्, तद्वंशस्योपरिष्ठानि कतिपयनामधेयानि देवानामासते पश्चात् प्रोक्तानि नामानि च मनुष्याणां विद्यन्ते। सूर्यवंशे सूर्यादयो देवशरीरधारिणो दशरथादयश्च मनुष्यदेहवन्तो वर्त्तन्ते। ततो दैव्यां सृष्टौ विविधवैलक्षण्यं स्यात्, मनुष्यसृष्टौ तु नैव तादृग् वैचित्र्यं भवेत्। अतः पूर्वोक्तैः षड्भिः सिद्धान्तैः सहैष सिद्धान्तोऽप्यवधेयः॥१२-१८॥

## द्वादशोत्तरशततमाध्याये वरशापसामर्थ्योपपादनम्।

वरदानशापदानशक्त्योर्मनोबलेन सह सम्बन्ध आस्ते। येनाजन्म कदाचिन्नानृतमभाषि, तस्मिन्नेव तादृङ्मनोबलं निःसंशयं भवेत्। द्वितीयतः कलिकल्मषदूषितमानवान्तःकरणं स्वभावाद्विषयासक्तं जायते। तत्र मनोबलं कथं सम्भवेत्। तस्मात् तमःप्रधाने कलिकाले शापवरप्रदानयोः शक्तिर्नैव लोचनगोचरतामापद्यते। अन्यस्मिन् युगे तु मानवानां मनोबलं प्रकृत्यैव प्रबलमासीत् तदा शापवरदानशक्तिरपि बाहुल्येन दरिदृश्यते स्म ॥ २१-२५ ॥

## त्रयोदशोत्तरशततमाध्याये वर्णाश्रमशृङ्खलायां रजोवीर्ययोर्मुख्यामुख्यविचारः।

एतद् वर्णाश्रमशृङ्खलायाः सर्वोत्तममुदाहरणमस्ति। तथा हि, वर्णाश्रमपरम्परायां रजोवीर्यशुद्धिः सर्वतो मुख्या मन्यते। ततो रजोऽशुद्धतायामपि वीर्यस्य प्राधान्यमङ्गीक्रियते। तस्मात् प्राचीनकाले सवर्णविवाहो मुख्यो धर्मसङ्गतश्चामन्यत। स्वस्मान्निम्नवर्णाभिः कन्याभिः सह विवाहविधानमपि तदैव सम्भवेत्, यदा सवर्णकन्यया सह विवाहबन्धनं पूर्वं जायेत। धर्माविरुद्धोऽपि स विवाहः कामज आख्यायते स्म, स्वस्मादुच्चवर्णिककन्याभिर्विवाहसम्बन्धस्तु पापमयो मन्यते स्म ॥ १७-२३ ॥

## चतुर्दशोत्तरशततमाध्याये सनातनधर्मस्य सर्वव्यापकतां वर्णाश्रमशृङ्खलाया दूरदर्शितां प्रजाराजधर्मयोर्मौलिकताञ्च विशिनष्टि।

उपर्युक्तगाथया सनातनधर्मस्योदारता सर्वव्यापकता च, वर्णाश्रमशृंखलाया दूरदर्शिता शक्तिमत्ता च, सिध्यति। द्वितीयतो राजप्रजाधर्मयोर्मौलिकता परस्परं घनिष्ठता च परिसिध्यति। जातिमर्यादाया जातिगौरवस्यापि केवलं रक्षाभावात् वर्णाश्रमशृङ्खलायाः सिद्धान्तोपेक्षणादेव च क्षत्रियोऽपि महाराजकुमारो नाभागो वैश्यत्वमाप्तवान्। स्वर्गतेऽपि ताते वर्णाश्रमधर्मावलम्बिना पुत्रेण परलोकगतस्य पितुः पारलौकिकोन्नतये कीदृग् विचारो रक्षणीयः, इति वर्णाश्रमसिद्धान्तो गाथयाऽनया विशदीभूयते। द्वितीयतः स्वभावतो राजभक्तः सनातनधर्मी प्रजावर्गः स्वशासके नृपे परलोकं प्रस्थितेऽपि कीदृग् व्यवहरति कीदृशञ्च मूल्यवत्त्वं राजाज्ञायाः सनातनधर्मावलम्बिभिर्मन्यते इति गाथेयमुद्बोधयति। अत्र शङ्क्यते–क्षत्रियजाते रजोवीर्याभ्यामुत्पन्नोऽपि जनः कथं वैश्योऽभूदिति ?। तत्र समाधीयते–प्रथमं तु जन्मनाऽधिभूतशुद्धिः कर्मणाऽ

धिदैवशुद्धिर्ज्ञानेन चाध्यात्मशुद्धिरित्थं जातेस्त्रिविधशुद्धिरधिजायते। तथा हि, ब्रह्मचिन्तनेन, ब्रह्मधारणया, ब्रह्मोपासनया स्वस्वरूपोलपब्धितश्च ब्राह्मणो निजाध्यात्मशुद्धिं लभते, स आध्यात्मिको ब्राह्मणो वोभवीतीति भावः। एवमेव यजनयाजनादिषट्कर्मभिः, वेदपाठैः, गायत्रीजपादिभिश्च ब्राह्मणवीर्योत्पन्नव्यक्तिरधिदैवरूपेण ब्राह्मणो जायते, तथा च यथाधर्मशास्त्रमूढाया ब्राह्मण्या मातूरजोयोगात् पितुर्ब्राह्मणस्य वीर्याज्जायमानो जन आधिभौतिकशुद्धिसमन्वितो ब्राह्मण उच्यते। आधिभौतिकशुद्धिर्नैव परिवर्त्यते, तस्माज्जातिनिर्णये प्राधान्यमस्या आम्नातम्। किन्त्वेतन्निश्चितमवगन्तव्यं यत्, त्रिविधशुद्धिसद्भावे एव जातेः पूर्णत्वमुपजायते। एतदेव वर्णधर्मस्य मौलिकं दार्शनिकञ्च रहस्यमस्ति। एतमेव सिद्धान्तमवलम्ब्य वर्णाश्रमधर्मावलम्बिनी आर्यजातिरस्मिन् विनश्वरेऽपि संसारे चिरजीविनी वर्त्तते। प्राचीनैरर्वाचीनैर्द्विविधैरैतिहासिकैरपि रहस्यमेतत्स्वीक्रियेत। शापवशाद् राजपुत्रनाभागस्याध्यात्मिकी आधिदैवी च शुद्धिस्त्वरितमेव प्रणष्टा, पातित्यहेतोस्तस्याधिभूतशुद्धिरपि मालिन्यमुपागमत्। यथा—अधिभूतशुद्धया समुत्पन्नोऽपि ब्राह्मणश्चाण्डालाद्यन्नग्रहणेन नीचसंसर्गेण नीचचिन्तादिभिश्च पतितो भवन्नीचतामाप्नोति न वायं ब्राह्मणोऽभिधीयते तथैव शापग्रस्तो राजकुमारो वैश्यत्वं प्राप्तवान्। एतावता इदमपि बोध्यम् यद् उच्चजातिर्व्यक्तिरुपर्युक्तविज्ञानानुसारं नीचजातिर्भवितुमर्हति, किन्तु नीचजातीयो जनो नैवोच्चजातितामुपगन्तुं शक्नोति; यतोऽधिभूतशुद्धिर्नैवात्महस्ते वर्त्तते ॥ १७–३६ ॥

## षोडशोत्तरशततमाध्याये जृम्भणस्याधिदैवविज्ञानविवेचनम्।

वैदिकविज्ञानं प्रतिपदार्थं स्वरूपत्रयं निरूपयति, अयमपि वैदिकदर्शनसिद्धान्तो वर्त्तते यत् काऽपि जडक्रिया चेतनसाहाय्यमन्तरेण नैव सञ्चालयेत। या जृम्भणात्मिका जडक्रिया वायोरसती तमोमयी परिणतिरास्ते, सा क्रिया चतुर्विधभूतसङ्घादारभ्य मनुष्यपर्यन्तं दृश्यते। एवंविधसर्वव्यापकबलशालिक्रियाया अधिदैवमवश्यमास्ते। यतो निश्चितमेतद् यत् प्रत्येकपदार्थस्याधिभूताधिदैवाध्यात्मरूपाणि नूनमुपजायन्ते। तस्माज्जृम्भणात्मिकाया व्यापकप्रकृतेः क्रियाया अधिदैव एव असुरो विद्यते। सनातनधर्मानुयायिनो त्रयस्त्रिंशत्कोटिदेवानामस्तित्वं मन्यन्ते, तन्मौलिकरहस्यमेतदेवास्ति यत्, प्रकृतिराज्यस्य यावत्यः क्रिया यावन्तो विभागाश्च वर्त्तन्ते तच्चालकाः चेतना असुरा

देवा वा वर्त्तन्ते। एतदेव देवासुरलोकत्राक्तव्यानामस्थितत्वानुभूतये प्रधान-मेकं विज्ञानमस्ति ॥ १६-२२ ॥

## वर्णाश्रमशृङ्खलारहस्योद्घाटनम् ।

यावद् वर्णाश्रमश्रृङ्खला यथावदवतिष्ठते, तावदाध्यात्मिकोन्नतिशीलाया मनुष्यजातेः पवित्रता सन्तिष्ठते। वर्णाश्रमश्रृङ्खलाया सद्भावेन तां मन्यमानाया आर्यजातेराचरणप्रभावेण च यथा देवलोकस्याभ्युदयो नितरां विराजते तथैवा-स्मिन् मृत्युलोके मनुष्यजातेर्धनबाहुबुद्धिविद्याबलानि प्रपूर्यन्ते। तस्माद् वर्णा-श्रमश्रृङ्खलां मन्यमाना तत्र यथावत् सञ्चलनशीला आर्यजातिः त्रिलोकमङ्गलं विधत्ते। अयमेव वैदिकदर्शनसिद्धान्तनिश्चयो वर्त्तते। प्रजानां वर्णसाङ्कर्येण पवित्रशृङ्खलेयं प्रणश्यति। तस्माद्धेतोरार्यनारीषु सतीधर्ममहत्त्वं सर्वतोऽ-तिशेते। तदेकपतिव्रतात्मकं तप एव वर्णाश्रमधर्मस्य मूलं मन्यते स्म। राजैव प्रजा धर्ममार्गे प्रचालयितुं प्रतिबोभूयते। तत एव राजा कालस्य कारणं जायते। यश्च नरेन्द्रो वर्णाश्रमशृङ्खलां सम्यक् प्रचालयति तां परिग्लानेः परिरक्षति च, स एव राजा त्रिलोकपूजितो भवति ॥ ७१-७६ ॥

## सप्तदशोत्तरशततमाध्याये राजपुरोहितकुलयो रक्षायाः प्रयोजनं निर्दिशति ।

राजकुलकृते पुरोहितकुलस्य नितान्तमावश्यकत्वमास्ते। राजकुलपवि-त्रताया राजवंशीयव्यक्तीनां सदाचारशिक्षयोर्यादृक् प्रयोजनं वरीवर्त्ति। तत्सम-मेव राजवंशीयपुरोहितब्राह्मणवंशस्यापि पवित्रता—सच्छिक्षा—सदाचारा—भिज्ञता-तपस्यादीनामभिवृद्धेस्तादृगेवावश्यकत्वमपेक्ष्यते। शुद्धराजकुलेष्वपि पुरोहितकुलानां सुरक्षाभावात् राजवंशा नश्यन्ति भ्रश्यन्ति च। इदमेव क्षत्रिय-ब्राह्मणयोः क्रियाज्ञानशक्त्योः सहयोगित्वमास्ते। क्षत्रियैरुदारैर्दानशीलैर्निर्लो-भैर्निर्भयैः स्वधर्मपरायणैश्च भवितव्यम्। तथैव पुरोहितवंश्या अपि जनास्त्या-गिनस्तपस्विनो विद्याव्यसनिनो दूरदर्शिनो धर्मोपदेशे निर्भीकाश्च भवेयुः। इत्थमेव क्षत्रियब्राह्मणयोः सहयोगिता सम्भवेत् ॥ २०-२६ ॥

## सप्तदशोत्तरशततमाध्याये मनोमन्त्रयोरभिचारादिक्रियाणाञ्च विज्ञानविमर्शः ।

मीमांसाशास्त्रं सिद्धान्तयति यत्, कस्या अपि क्रियायाः प्रतिक्रियाऽ-वश्यं भवति। अधिकारस्य त्रिभावात्मकत्वात् शारीरिक-मानसिक बौद्धिक-क्रियाभेदैः क्रियायास्त्रैविध्यमुपजायते। तत्र मानसिकक्रियाबलं सर्वतोऽतिशेते, यतो मन एव सङ्कल्पशक्तेः केन्द्रमास्ते। सा च शक्तिर्निर्बाधं सर्वव्यापकमधि-

कारमाप्नोति । द्वितीयतस्तपोमन्त्रादिभिः कृते बलसञ्चये सा शक्तिरसम्भवमपि सम्भवं करोति । यस्य साधकस्य मनोबलं यावदधिकायते स तावदेव स्वसङ्कल्पशक्त्या महतोऽपि महत् कार्यं सम्पादयति । मनोबलस्य तस्य वृद्धये कार्यक्षमत्वाभिवृद्धये च द्रव्य-क्रिया-मन्त्र-शक्तीनां प्रयोजनमुपजायते । द्रव्याणां गुणाः क्रियाणां योग्यताश्चाधिकतोऽप्यधिकतमाः सम्भवेयुः । द्रव्यक्रियाविशेषाभ्यां यादृक् किञ्चित् फलमुत्पद्यते, तच्च प्रत्यक्षमवलोक्यते, न तद्बोधनस्य प्रयोजनमास्ते । देवजगत्समन्वयी शब्दो मन्त्रोऽभिधीयते । यस्य मन्त्रविशेषस्य यावानधिको विपुलोपयुक्तकालतोऽधिकसिद्धक्रियाकलापैः समं सम्बन्धो भवेत् स मन्त्रस्तावान् बलशाली आम्नायते, अस्माद्धेतोः सप्तशत्यादिस्मार्त्तमन्त्रा गायत्र्यादिवैदिकमन्त्राश्चैतादृशमलौकिकमहत्त्वमाप्नुवन्ति । एतावन्मन्त्रशक्तिप्राबल्यादेव प्रायश्चित्तानुष्ठानादिभिः प्रबलोऽपि पूर्वार्जितकर्मवेगो मत्तमातङ्गेन सामान्यहस्तीवापनोद्यते । किन्त्वत्र योग्यानुष्ठानकर्त्ता, योग्यमन्त्रादिः, शृङ्खलामयी क्रिया चैतत्त्रयाणामेकाधारे समावेश एव एतादृक्कर्मसाफल्याय कल्पते । एतत् सर्वं कार्यजातं मन्त्रक्रियासाहाय्यतो यथायोग्यं दैवजागतिकशक्तिभिरेव सम्पाद्यते । यथायोग्यं मन्त्रक्रिये सङ्कल्पशक्तिनियोजिते प्राणसाहाय्येन दैवं जगदुपगच्छतः । ताभ्याञ्च देवजगति प्रभावमुत्पाद्य नूतना दैवी प्रतिक्रियाऽऽविर्भाव्यते । अस्या दैव्याः क्रियाया अपि त्रयो भेदा भवन्ति । तथाहि, प्रारब्धानुकूल्ये सति अस्मिन्नेव मृत्युलोके नितान्तसौकर्येण तत्प्रतिक्रिया प्रजायते । स्वल्पबलशालिनि प्रारब्धे तु दवप्रेरणया मनुष्यपिण्डे प्रादुर्भूय फलमुत्पादयति । यद्यनुष्ठानादिक्रिया प्रारब्धप्रतिकूला भवेत्, तथा च सा क्रिया किञ्चिद्बलवत्कार्यकृते नियोज्यते तदा देवशक्तयो यथायोग्यकार्यनिमित्तं कार्यक्षेत्रमवतीर्णाः कार्यं विदधीरन् । तत् कार्यं साधु चेन्नैव भयमुत्पद्यते, असच्चेत् तत् कार्यं तर्हि तस्माद्धानिरपि सम्भाव्यते । यथा किल विश्ववेद्या उदाहरणे प्राप्यते । एतादृशान्यनुष्ठानानि नानाश्रेणीसमूहे विभज्येरन् । तथाहि—रोगविपदादिनिवारणार्थमनुष्ठानादिकम्, पापापनोदनाय प्रायश्चित्तादिकम्, इष्टैश्वर्यादिलब्धये तपस्यादिकम्, परपीड़ाजनितस्वार्थसिद्धयेऽभिचारादिकञ्च । अत्र तुरीयस्याभिचारादेः पूर्वोक्तमुदाहरणमास्ते । यदभिचारादिकं कर्म सिद्धसाधकस्य, सिद्धमन्त्रस्य, सिद्धक्रियायाश्च एकस्मिन्नाधारे समावेशतः सिध्येत । दैवं जगत् मन्त्रादिकञ्च विश्वसन्त आस्तिका एतन्मन्यन्ते योगिनश्चेदमनुभवन्ति । अत्र शङ्कासमाधानमुच्यते—एतादृगनुष्ठानादिक्रियाकलापस्य यद् वैफल्यमत्रलोक्यते तत्रानेके हेतवो विद्यन्ते ।

यथा—कालशुद्धेरभावः, अनुष्ठानकर्त्तुरयोग्यता, अनुष्ठानज्ञानसत्त्वेऽपि सत्य-ब्रह्मचर्याद्यभावात् कर्त्तुर्मनोबलविनाशः, मन्त्रशुद्धेरभावः, सिद्धमन्त्रस्यापि सिद्धेरलाभः, अनुष्ठाने द्रव्यशुद्धेरभावः, तत्र क्रियाभङ्गः यदर्थमनुष्ठीयते तत्प्रारब्धप्राबल्यम्, देवगुरुकृपाप्राप्तेर्विरुद्धक्रियाऽवरोध इत्यादयः। एतान्यखिलमौलिकरहस्यान्यवगत्य एतादृक् साधनं विधेयम् ॥ ४४—५१ ॥

## विंशोत्तरशततमाध्याये मनुष्यवत् पशुष्वपि वाक्शक्त्यादिविकाशकारणनिर्देशः।

मनुष्यवत् पशुष्वपि वाक्शक्तिबुद्धितत्त्वयोर्विकाशो वैराग्यादय उच्चवृत्तयश्च कथं सम्भवन्ति ? यद्यप्येवंविधानां शङ्कानां समाधानं पूर्वमपि किञ्चिदुक्तम्, तथाप्यत्र पुनरुच्यते-ये आरूढपतितजीवाः पशुयोनिमागच्छन्ति। किञ्च, ये देवमानवपिण्डयोर्जीवाः पापभोगनिमित्तमारूढपतिताः कियन्तं कालं सहजपिण्डात्मकपशुयोनिमायान्ति, तेष्वेताः सर्वा वाक्शक्त्यादयः कतिपयशक्तयो वा नूनं सम्भवन्ति। द्वितीयमपि वैज्ञानिककारणमत्रास्ते यत् लक्षाधिकवर्षात्मकस्य कल्पान्तरस्य सृष्टौ जीवशक्तिषु न्यूनाधिक्यं स्वतः सिध्यति ॥ ६–१० ॥

## निःसन्तानस्य कथं नरकभयं भवतीति विवृणोति।

राज्ञां पशूनाञ्च निःसन्तानत्वे कथं दुःखमुत्पद्यते ? कथं वा निसन्तानव्यक्तेर्नरकभीतिरुपजायते ? एवंविधाः शङ्का इत्थं समाधीयन्ते यत्, प्रजातन्तुं सन्ततिरेव पाति। पुत्रः पितुः प्रतिकृतिर्जायते। धार्मिकपुत्रः पितुः सर्वधर्मान् कर्त्तव्यानुष्ठानानि च सम्यक् साधयति, मृत्युलोकः अन्याखिललोकानां केन्द्रं विद्यते। गमनागमनचक्रचङ्क्रमणपारवश्याज्जीवाः सर्वेष्वन्यलोकेषु परिभ्रम्य ततः पुनः पुनरेतं मृत्युलोकमागच्छन्ति। यतोऽयं मृत्युलोकः कर्मभूमिः, तस्मादत्र भूयोऽपि सत्कर्म कृत्वा जीवैराध्यात्मिकोन्नतये नूनमवसर आसाद्यते। स्थूलदेहस्य निर्माणं तदीयं यथावदनुपालनञ्च अर्यमादयो नित्यपितृगणाः प्रकुर्वते। तेषां नित्यतृप्तिविधानं तदैव 'सम्भवेत्, यदा प्रजातन्तुरक्षणं सन्ततिक्रमोऽव्यत्ययः स्यात्। द्वितीयतः परलोकगतात्मने तदीयपुत्रपौत्रादयः श्राद्धतर्पणादिकर्मभिः परलोकेऽपि साहाय्यं प्रयच्छन्ति। तृतीयत आध्यात्मिकोन्नतिशीलवंशपरम्परायाः सृष्टिर्देवर्षिपितॄणां संवर्धनाय कल्पते, यतः समग्रदेवलोकः संवर्द्धितो बोभूयते। तस्मात् प्रवृत्तिमार्गानुगामिनां कृते सन्तानस्य नितान्तमावश्यकताऽऽम्नायते। तुरीयतो देवर्षिवर्गं विशेषतः पितृगणं संवर्द्धयितुं या श्रृङ्खला विद्यते तदुच्छेदात् पुत्रहीनव्यक्तिभिः प्रत्यवायः प्रतिपद्यते, एतेन

तत्कृते नरकयन्त्रणाभोगोऽपि सम्भवेत्। मनुष्यो हि स्वकर्त्तव्यपालनाभावान्नूनं नरकमुपगच्छति। यथा-नित्यकर्माननुष्ठानान्मनुष्यैर्नरकमुपभुज्यते। एत एव चत्वारो विषया अपुत्रस्य नरकभोगाय हेतवो भवन्ति। अपि चेन्नियमोऽयं न पशुनिमित्तमुपकल्पते तथापि आरूढ़पतितत्वादनेन नियमेन पशुरपि सम्बध्यते ॥ ११-१५ ॥

### मृगचिन्तायाः कारणनिर्देशः।

एकतो द्वितीयमृगचिन्ता मृगसन्ततिनाशस्य, द्वितीयतो व्याघ्रादिहिंस्राणाम् अन्येषां शाकाहारिप्राणिनां नाशस्य च, सा केवलं भयमूलिका वर्त्तते। परन्तु तदीया या कथा वरुणसूर्याग्निविषये वर्त्तते सा अध्यात्मभावमूलिका विद्यते। नेदमाधिभौतिकवर्णनमस्ति ॥ २६-३० ॥

### नात्र श्राद्धादिनिन्दाप्रसङ्गः।

प्रथमं राज्ञः प्रवृत्तिधर्मानुसारमभ्युदयमूलको विचार आसीत्। अतस्तस्मै श्राद्धादिपितृयज्ञविधानं मांसादिसंग्रहसम्पादनञ्चाभ्यरोचत। यश्च गृहस्थानां स्वाभाविको धर्मः। किन्त्वन्ते उभयोरारूढ़पतितमृगयोः कथोपकथनाभ्यां विषयवैराग्याभिवृद्धौ तस्य निवृत्तिधर्माधिकारो जातः। तदाऽसौ नृपवरो दृष्टानुश्रविकविषयवितृष्णो निवृत्तिधर्ममध्यकार्षीत्, तदैवायमभ्युदयमार्गमुत्सृज्य निःश्रेयसमार्गस्य पथिकोऽभूत्। तेन तपस्यादिकं यदाचरितम्, तत् सर्वं निःश्रेयसनिमित्तमेव कृतम्। तस्मान्नानया गाथया श्राद्धादीनां निन्दा प्रजायते, प्रत्युत निवृत्तिधर्मस्य महत्त्वं प्रतिपाद्यते ॥ ३८-३९ ॥

### पञ्चविंशोत्तरशततमाध्याये 'किमिच्छिक' व्रतविधाननिर्देशः।

अस्मिन् व्रते येन याचकेन यत् किञ्चिद् याच्येत, तत्तस्मै दत्त्वा सन्तोषयेत्, तदैव व्रतमिदं सफलं भवति। इत्थमेव वैदिकयज्ञेषु दानसम्बन्धिनो विश्वजित्प्रमुखा अनेके यज्ञाः सन्ति। किन्त्वेवंविधा व्रतयज्ञादयो राजभिरेवानुष्ठेया नेतरैः सामान्यमनुष्यैः। पुरुषेभ्यो यज्ञा विहिताः, स्त्रीभ्यश्च व्रतानि निर्दिष्टानि ॥ १-६ ॥

### पुराणेतिहासभेदप्रतिपादनं गृहस्थानां ब्रह्मचर्यपालनञ्च गार्हस्थ्यधर्मविरुद्धमिति प्रतिपादयति।

पुराणेषु चतुर्विधं सृष्टिप्रकरणं, खण्डसृष्टिप्रकरणम्, यत्र देवसर्गादिवर्णनं भवेत्। वंशाद्यनुचरितम्—यत्र मृत्युलोकप्रभवाणाम् ऋषीणां (पुण्यशालिब्राह्मणानाम्) राज्ञां (धार्मिकक्षत्रियाणाम्) च वंशा वर्णिताः स्युः, काल-

वर्णनं मन्वन्तरवर्णनमिति यावत्, यतः सृष्टिश्रृङ्खलायाः सभ्यताविभागानाञ्च वृत्तान्तो लभ्येत, इत्थमेव ऋषीणां राज्ञाञ्च वंशजाः सन्ततयः प्रजातन्तवश्च वर्ण्यन्ते। एतत्पञ्चलक्षणयुक्तमेव पुराणमभिधीयते। प्रत्येकमहापुराण-पुराणोपपुराणौपपुराणादिकेऽस्य लक्षणपञ्चकस्य न्यूनाधिक्यतः समावेशोऽवश्यं सम्भवेत्। तत्रैतावानेव भेदो यत् कुत्रचित् पुराणे पञ्चविषयाणामेषां कस्यापि वर्णनमाधिक्येन कस्यचिद्विषयस्य संक्षेपतः प्राप्यते। द्वितीयोऽप्ययं भेदो यत्, क्वचित् पुराणे पञ्चस्वेतेषु विषयेषु कस्यचिदेकस्य विषयस्य वर्णनं सातिशयमधिकायते तत्र तस्यैव च प्राधान्यमुपजायते, यथाऽस्मिन् मार्कण्डेयपुराणे मन्वन्तरवर्णनस्यैव प्राधान्यं वर्त्तते। पुराणेतिहासयोस्तृतीयभेदोऽयमास्ते—यत्र मृत्युलोकस्य लौकिकेतिहासोऽधिको भवेत्, स इतिहास आख्यायते, यत्र च ऐहिकामुष्मिकवर्णनं समं सम्पद्यते तत् पुराणमाचक्षते। तथा हि, महाभारते कौरवपाण्डवादीनां लौकिकेतिहासप्राचुर्यात् रामायणे च श्रीरामचरितलौकिकेतिहासबाहुल्याद् द्वावेव महाभारतरामायणौ इतिहासौ भण्येते, द्वितीयतः-श्रीदेवीभागवत-श्रीविष्णुभागवत-श्रीमार्कण्डेयपुराणादिषु सर्वविषयाणां साम्यसद्भावात्, लौकिकेतिहासानामाधिक्याभावाद् वा एतानि पुराणानि प्रोच्यन्ते। चतुर्विधं सृष्टिप्रकरणम्, यद्वर्णनं पूर्वमपि बहुवारमायातम्। यथा—प्राकृतसृष्टिः, ब्राह्मी सृष्टिः, मानसी सृष्टिः, बैजी सृष्टिश्च। आसामपि सम्मिलितं वर्णनं पुराणेषूपलभ्यते। किन्तु कुत्रापि पुराणे एतच्चतुर्विधसृष्टिषु कस्याश्चित् सृष्टेर्वैशिष्ट्यं प्रतिपादितम्। द्वितीयतः सृष्टिप्रकरणविषये कस्मिंश्चित् पुराणे मन्वन्तरादिविचारतः सृष्टिलीलाया अधिकाधिकं विततवर्णनं विहितम्। कस्मिंश्चन दैव्या मानव्या वा सृष्टेर्व्यासतो वर्णनमकारि। इत्थमेव सर्गप्रतिसर्गयोर्वर्णने मतभेद इव प्रतीयते। किं बहुना, कुत्रचित् पुराणे एकस्य विषयस्याधिक्यमन्येषां न्यूनत्वमधिगम्यते। तस्मात् सर्वेषां बहूनां वा पुराणानामध्ययनं विना पुराणानामाध्यात्मिकरहस्यं नावगन्तुं शक्येत न वा तद्बोधविधानस्य परिपाटी परिचीयेत। वंशवंशानुचरितवर्णनविषयेऽपि बहूनि ज्ञातव्यानि सन्ति, इतिहासेषु प्रायशो लौकिकवंशवर्णनमधिकमुपजायते पुराणेषु च देववंशवर्णनं वितन्यते। किञ्च त्रिकालदर्शिनां पूज्यपादमहर्षीणां योगदृष्टिसमक्षे मठाकाशमहाकाशयोरिव स्थूलो मृत्युलोकः सूक्ष्मो दैवलोकश्च समानमेवाक्षिगोचरतामापद्यते तदुभयदर्शने न तेषां काऽपि बाधा जायते। अतो वंशवर्णने दैवी सृष्टिर्लौकिकी च सृष्टिः, दैवो वंशो लौकिकश्च वंशः उभये सम्मिलिते वर्ण्येते। यथा—सूर्यवंशस्य सूर्यादेरुत्पत्तिर्या मन्यते स्म सा दैवी वर्णना,

या च दशरथादेः सकाशात् सूर्यवंशस्य प्रभवोऽङ्गीकृतः तल्लौकिकवर्णनमव-गन्तव्यम्। इत्थं दैवीं मानुषीञ्च वंशपरम्परां सम्मेलयावबोधनान्न पुराणपाठ-कानां पुराणेषु भ्रान्तिरुत्पद्यते, सम्यक् चैतद्रहस्यावधारणादेव ऐहलौकिका ऐतिहासिका अपि जना न विपथगामिनो भवेयुः। वंशवर्णनं वंशानुचरित-ञ्चावगन्तुं पुराणपाठकैरेतन्निश्चितं प्रणिधेयम्, यत्, पुराणलेखनकाले पूज्यपाद-त्रिकालदर्शि-महर्षयो योगयुक्तसमाधिदृष्ट्या नानामन्वन्तरकल्पान्तरीया गाथा उपलेभिरे, यदा ते स्वरूपावस्थानाद् व्युत्थानदशामासवन्तस्तदा तत्र सवि-कल्पसमाधौ विचारानुगतावस्थायां कल्पकल्पान्तरोपयुक्तं वंशानुचरितं गाथारूपेण तेषामन्तःकरणपटले समुपतिष्ठते स्म। तस्मादेता गाथा न कपोल-कल्पिता नाहोस्विल्लौकिकरीत्योपलब्धा आसते। मन्वन्तरकल्पादीनां वर्ष-सङ्ख्या बहुवारं व्याहृता। प्रवर्त्तमानवंशानुचरितमतिदुर्ज्ञेयैर्धर्मसिद्धान्तत-त्त्वैर्मधुरैर्वर्णाश्रमशृङ्खलारहस्यैश्च प्रपूर्यते स्म। ऋषीणां दैवी शक्तिः, क्षत्रिय-नरपतेः क्षात्रम्, पित्रोः स्नेहसुलभो व्यवहारः, पुत्रराजकुमारस्य क्षत्रियोचित-वीरतादिगुणगणैः सममेव इन्द्रियसंयमब्रह्मचर्ययोरलौकिकत्वम्, स्त्रीणां सती-त्वम्, विशेषतः क्षत्रियस्त्रीसतीत्वमर्यादायाः समुज्ज्वलमुदाहरणम्, वर्णाश्रम-मर्यादायाः पालनम्, पित्रोर्भक्तिः, दैवे जगति निश्चलो विश्वासः, इत्यादयोऽस्यां गाथायामाविरभवन्। राजकुमारस्य लोकोत्तरं ब्रह्मचर्यमपि एतद्गाथामह-त्त्वप्रतिपादकमास्ते। पितामहस्य भीष्मादेर्ब्रह्मचर्यं सहेतुकमासीत्, राजकुमा-रस्य तु ब्रह्मचर्यं व्रतमूलकमवर्तिष्ट, तस्मादत्र विशेषतः स्वारस्यम्। अमुष्यां गाथायाञ्च प्राचीनराजवंशानाम्, राज्ञां राजमहिषीणां राजकुमाराणाञ्च मिथो मर्यादायुक्तसम्बन्धस्यापि सम्यग् दिग्दर्शनमस्ति। राजपुरोहितानाञ्च धर्मस-म्बन्धे व्रतबन्धे च कीदृगधिकारः पुराऽऽसीदस्यापि दिग्दर्शनमकारि। गृहस्था-श्रमे वर्त्तमानानां गृहमेधिनां निःसन्तानत्वे ब्रह्मचर्यधारणं नैव सदाचारकोटि-मारोहति, तत्त्वेकविधं पापमास्ते। यतो गृहस्थानां कृते वर्णाश्रमशृङ्खला-संरक्षणं पितृसंवर्द्धनरयञ्च कार्यक्षेत्रपरिपालनमेव पुण्यं कर्म विद्यते। अस्यापि दिग्दर्शनमत्रास्ति। एतदपि स्तोकतोऽत्र विन्यस्तम्, यत् ब्रह्म-चर्यस्य सर्वप्रधानत्वेऽपि नेदं क्रीडावत् सुगममास्ते॥ १–३०॥

## षड्विंशोत्तरशततमाध्याये गाथावैचित्र्यसमाधानम्।

इयं वंशानुक्रमवर्णनस्य गाथा मृत्युलोकीयस्य कस्यचित् कल्पान्तरी-यस्य वर्त्तते। अत्र यद्देवनाऽऽविर्भावो दैवसाहाय्यासादनम्, अन्यलोकेन सह मनुष्यलोकस्य सम्बन्धस्थापनमित्याद्यलौकिकवृत्तं साम्प्रतमसम्भवं प्रतीयते,

तत्समाधानमेतदेवास्ते यत्, प्रथमन्तु एकयुगाद्युगान्तरीयशक्तौ महदन्तरमीक्ष्यते पुनश्चैकमन्वन्तरादन्यस्मिन्मन्वन्तरे जीवानां शक्तौ अधिकारे च विपुलः प्रभेदः प्रजायते, कल्पकल्पान्तरस्य तु कथैव का। तस्मादत्र मनोरमाया गाथाया अलौकिकत्वे नैव संशयितव्यम् ॥ ४०-४७ ॥

### ऊनत्रिंशदुत्तरशततमाध्याये 'राज्याभिषिक्तभूपतीनां भोगे नैवासक्तिर्विधेया' इति प्रतिपादयति ।

राजकुमारावस्थायां यौवनसुलभयोः चाञ्चल्यभोगसंस्कारयोः सद्भावाद् राजवंशप्रसूतो जनो भोगपरायणो भवितुमर्हति। किन्तु यदा राजा राज्यसिंहासनमधिरोहति राज्याभिषेकयज्ञेन च तच्छरीरे देवपीठं प्रतिष्ठाप्यते तदा स दैवराज्यस्य साक्षात् प्रतिनिधिर्निर्मीयते। तदा तस्य भोगपरायणत्वे पापमुपजायते, भोगाद् विरम्य धर्मस्थापनं पुत्रवत् प्रजापालनमेव च तस्यैकमात्रं जीवनलक्ष्यमुचितं भवेत्। आर्यजाते राजधर्मस्यैष एव बीजमन्त्रः। तस्मादस्मिन् स्थलेऽस्यां गाथायामार्यराजमहिष्या भोगान्निवृत्तये राजाऽऽदिष्टः ॥ २७-३४ ॥

### एकत्रिंशदुत्तरशततमाध्याये नागलोकस्य कथावैलक्षण्ये संशयापनोदनम् ।

अस्यां गाथायां नागलोकवासिनां जीवानां यदलौकिकत्वमवलोक्यते, नात्र सन्देहसन्दोहैर्विचलितव्यम्। एतत्तु लौकिक इतिहासोऽपि प्रतिपादयति यत् कतिविधा जीवश्रेण्यः कियन्तो महाशक्तिधारिणो नानारूपशालिनो जीवाश्चास्मिन् मृत्युलोके पुरा लोचनगोचरतामापद्यन्त, न त्विदानीमवलोक्यन्ते। सुप्राचन्यान्यपि कतिचिद्विधानि परिवर्त्तनानि लौकिकेतिहासयुगेऽपि दृश्यन्ते। लक्षलक्षाधिकवर्षात्मकेषु मन्वन्तरेषु कोटिकोटिवर्षात्मकेषु कल्पेषु च सर्पादियोनिजातानां रूपशक्त्यधिकारगोचरमेतादृग्वैचित्र्यपूर्णं वर्णनं नास्त्यसम्भवम्। अस्यां मधुरगम्भीरगाथायां पितामह्या मातापित्रो राजधर्मपालकस्य राजपुत्रस्य स्वस्वानुरूपधर्ममर्यादापालनेतिहासो नितरां चमत्कृतिं जनयते। प्रतिमन्वन्तरमेकब्रह्माण्डीयसृष्टेः सभ्यता अनुशासनपद्धतिश्च परिवर्त्तते। स्थूलोऽयं मृत्युलोको दैवजगदायत्त एव सुरक्ष्यते सञ्चाल्यते च। तस्मात् प्रतिमन्वन्तरमिन्द्रमन्वादिदेवपरिवर्त्तनेन सह ब्रह्माण्डस्य दैवी शृङ्खला परिवर्त्तते, तत्परिवर्त्तनेनैव सार्द्धञ्च सर्वश्रेणीयोन्नतजीवमात्रस्य शक्तौ सभ्यतायाञ्च विनिमयो बोभवीति, यथाऽस्मिन् मृत्युलोके परिवर्त्तिते राजानुशासने तत्सममेव मनुष्यसभ्यता दशान्तरमुपैति। ततो विज्ञा वदन्ति—'राजा कालस्य कारणम्' इति। एवं हि दैवे जगति यदा एकस्मिन् मनौ ब्रह्मीभूतेऽन्यो

मनुस्तत्पदमधिकृत्य कालमनुशास्ति तदाऽखिलब्रह्माण्डस्य सभ्यतायां नितान्तं विनियमो जायते। सर्वस्मिन् पुराणशास्त्रे यन्नानाविधवैचित्र्यपूर्णकथाकदम्बमुपलभ्यते तत्पाठाद् यश्च नैकविधसन्देहसन्दोहः समुत्पद्यते; एतादृग्वर्णनवैचित्र्यस्य यावन्तो दार्शनिकहेतवो भवेयुस्तत्र नानामन्वन्तरीयविभिन्नशृंखलाशकृत्योरनुसारतः सृष्टिवैचित्र्यं सभ्यतावैचित्र्यञ्च प्रधानं कारणं विद्यते। मार्कण्डेयपुराणे मन्वन्तरविमर्शप्रसङ्गे विभिन्नाया दैव्याः शृंखलायाः सूत्ररूपतो दिग्दर्शनमकारि। तदस्मिन् पुराणशास्त्रे वर्णाश्रमं मन्यमानाया आर्यजातेर्लोकोत्तरसभ्यताया गाथारूपतो मौलिकसिद्धान्तसमूहो यथास्थानं सम्यग् दर्शितः। धर्मभावतो धर्मः सर्वव्यापकः सर्वजीवहितकरश्च वर्त्तते। न केवलं स जीवहितकरः किन्त्वाब्रह्माण्डपर्यन्तं किञ्च प्रत्येकं परमाणु यावद्धर्मस्य धारिका शक्तिः सर्वेषां मङ्गलं विदधानाऽऽस्ते। रजोगुणात्मिकाया आकर्षणशक्तेः तमोमूलिकाया विकर्षणशक्तेश्च समन्वयाज्जायमानेन धर्मेणैव ब्रह्माण्डस्य ग्रहोपग्रहाः स्वमर्यादाः परिपालयन्ति। एतद्विज्ञानानुसारं पाषाणे पाषाणत्वम्, अग्नावग्नित्वमित्यादिरूपतः क्षुद्रान् महतो वा जड़पदार्थान् धारयन् धर्म एव तेषामस्तित्वमभिरक्षति। तथा हि, यदि पाषाणस्य धर्मशक्तिर्नश्येत् तदा रजोमूलिकाया आकर्षणशक्तेर्नाशात्तमोमूलिकाया विकर्षणशक्तेः प्राबल्याच्च पाषाणपरमाणुपुञ्जा विकृष्टा मृदो भविष्यन्ति पाषाणस्यास्तित्वं च प्रणङ्क्ष्यति। एतामेव सर्वव्यापिकां दुर्निवारां दैवीं व्यवस्थामनुसृत्य प्रतिजीवपिण्डं प्रमादजड़तानिदानं तमोगुणः क्रियामोक्षेच्छामूलको रजोगुणश्च यावत् समन्वेष्यतः, तावदेव सत्त्वगुण उदेष्यति तावदेव च समुन्नतजीवेषु धृति-क्षमा-दमाऽस्तेय-न्यायप्रेम-सत्यादिधर्मवृत्तीनामधिकारः समेधिष्यते। तच्च जीवपिण्डजातं धर्मजगत्यामग्रेसरिष्यति। एतदेव मनुष्यस्य मनुष्यत्वमास्ते। अग्रे प्रवर्द्धमाना सैव धर्मशक्तिः पुरुषे यज्ञधर्मात्मना नार्यां तपोधर्मरूपेण चोभयोः स्वतन्त्रं स्वधर्मं संरक्ष्य द्वयोः स्वस्वाधिकारानुरूपमभ्युदयं निःश्रेयसञ्चाभिलक्ष्य द्वावेवाग्रेसारयति। सैव धर्मशक्तिः पुनराध्यात्मिकोन्नतिशीलां दैवजगत्सहायिकां शुद्ध्यशुद्धिविवेकशालिनीं वर्णाश्रमशृङ्खलासञ्चालिनीं मृत्युलोकप्रभवामार्यजातिं नश्वरेऽपि संसारे चिरं जीवयति। तस्मादेव वर्णाश्रमिण्या आर्यजातेराचारविचारौ पृथिव्या अन्यसर्वजातिभ्योऽपूर्वौ विलक्षणौ च वर्त्तेते। चिरजीवित्वादाध्यात्मोन्नतिशीलत्वाच्च मनुष्यजातिसभ्यताविस्तारस्य यावान् ज्ञानराशिरास्ते सर्वस्यास्तस्या ज्ञानपद्धतेरादिगुरुर्जगद्गुरुरियमेव वर्णाश्रमधर्मावलम्बिनी आर्यजातिर्विद्यते। अस्मिन् विषये जगति न कस्यापि विदुषो मतभेदो भवितुमर्हति।

आर्यजातेर्विशेषधर्मस्य तद्विशिष्टसभ्यतायाश्च सर्वे महान्तो मौलिकसिद्धान्ता अस्मिन् पुराणशास्त्रे दिग्दर्शिताः। एकतो नारीजातौ अनुपमत्यागस्य तपोमूलकसतीत्वधर्मस्य च पूर्णता सङ्क्षेपतो व्याहृता, द्वितीयतः सामान्यतः स्त्रीणामात्मज्ञानाधिकारासत्त्वेऽपि त्रिलोकपावनपातिव्रत्यधर्मपालनेन सह नारीजातौ आत्मज्ञानस्य पूर्णता कथं प्रभवेत्, अस्यापि दिग्दर्शनमत्राऽकारि। आर्यजातेरयमेको विशेषधर्मः। वर्णमर्यादायाः पराकाष्ठा, वर्णविज्ञानस्याप्रतिममुदाहरणम्, वर्णधर्मः कथङ्कारमार्यजातेः प्राणरूपो विद्यते, इत्यादि सर्वमेवास्मिन् पुराणेऽनेकस्थलेषु सम्यग् दर्शितम्। आश्रममर्यादाया विशेषतः सर्वाश्रमसहायकस्य गृहस्थाश्रमस्य वैज्ञानिककथाकदम्बैरनुकरणीयजीवनचरितैरितिहासैश्च महापुराणमेतन्नितान्तं मधुरं मनोहरञ्च व्यधायि। एकतः परलोकवादस्य दैवजागतिकसिद्धान्तवादस्य तच्छृङ्खलायाश्च रहस्यानि दिग्दर्शयत् द्वितीयतः सप्तशतीगीतात्मिकां चण्डीमाविर्भावयत्, महापुराणमिदं न केवलं जगन्मान्यमेवाऽभूत्, किन्तु सर्वेषां जीवानां सातिशयं सहायकमप्यभवत्। रजोवीर्यशुद्धिरेव वर्णाश्रमधर्ममूलम्। रजोवीर्यशुद्ध्यैवाऽनादिकालत इयमार्यजातिः स्वीयां लोकोत्तरसभ्यतामपरिवर्त्तनीयमात्मीयमाध्यात्मिकलक्ष्यञ्च रक्षन्ती चिरजीविनी वर्त्तते। एतद्रजोवीर्यशुद्धिविज्ञानस्य प्रतिष्ठां महापुराणमेतत् सम्यक् प्रतिपादयति। शुद्ध्यशुद्धिधारणा स्पर्शास्पर्शविवेचना चार्यजातेर्विशेषत्वरक्षाया मुख्यमवलम्बनमास्ते। जातेरस्या आचारविचारशुद्धिर्जीवनमस्ति। किञ्च, त्रिविधान्येतान्याध्यात्माधिदैवाधिभूतलक्ष्याण्यभिलक्ष्यैव त्रिविधशुद्धये सदाचरणं सनातनधर्मिणां मुख्यमुद्देश्यमगन्तव्यम्। सर्वेषाममीषां वर्णाश्रममौलिकसिद्धान्तानां वीजमत्र पुराणे प्रतितिष्ठति। यथाऽनार्यजातेर्जीवनमैन्द्रियविषयभोगमूलकं बोभवीति तथैवार्यजातेर्जीवनं पारलौकिकोन्मुखं धर्ममोक्षलक्ष्यमूलकञ्च जायते। अपि चार्यजातेर्जीवनस्रोतः प्रवृत्तिगतिनिरोधात् क्रमशो निवृत्तिं शान्तिञ्चाभिलक्ष्य प्रवहते, एतद्दिग्दर्शनमस्मिन् महापुराणे विशदं व्यधायि। तपःस्वाध्यायनिरताया ब्राह्मणजातेस्तु कथैव का, अमितैश्वर्यशक्तिप्रभुत्वाधिकारशालिनोऽप्यार्यजातीया राजानः कीदृशस्त्यागिनो धार्मिकाः प्रजावत्सला अध्यात्मलक्ष्यनिर्भरास्तपोदानपरोपकारमूर्त्तयोऽभूवन्, राजैश्वर्यमगण्यं मन्यमानाः केवलं धर्मपालननिमित्तमेव प्राणान् बिभराम्बभूविरे। एवामुज्ज्वलैरुदाहरणैर्गाथामयैरेतन्महापुराणं परिपूर्यते। विज्ञमात्रमेवैतान् सर्वान् विषयान् विलोक्य आर्यजातेः प्राचीनां त्रिलोकपावनीं सभ्यतां परिचेतुं शक्ष्यति यथासम्भवमेतत् पवित्रचरित्रमनुकृत्य कृतकृत्यतामेष्यति च॥ १-५१॥

## द्वित्रिंशदुत्तरशततमाध्याये कर्मविज्ञानवर्णनम् ।

कर्मणैव मनुष्यो निष्कामभावमुपगन्तुमर्हति, न तु कर्मत्यागेन । एष सिद्धान्तः सर्वोपनिषत्सारभूतायां श्रीमद्भगवद्गीतायां पूर्णावतारेण श्रीमता भगवता कृष्णचन्द्रेण पूर्णतया प्रतिपादितः । कर्ममीमांसादर्शनमेतत् सिद्धान्तयति, यत् प्रकृतेः स्पन्दनं कर्म प्रोच्यते । यत्र द्वैतप्रपञ्चो यत्र वा सृष्टिरास्ते तत्र सर्वत्रैव जगदम्बाया ब्रह्मप्रकृतेर्विलासः । तस्मात् प्रकृतिराज्याद्बहिः स्वस्वरूपातिरिक्तं न किमपि भवेत् । सृष्टिं द्वैतं वा यावत् सर्वं तत् प्राकृतिकं प्रणिधेयम् । यत्र प्रकृतिरस्ति तत्र त्रयो गुणाः सन्ति, यतो गुणत्रयमेव प्रकृतेः स्वरूपम् । यत्र त्रयो गुणा भवन्ति तत्र त्रिगुणविलासजन्यं स्पन्दनमवश्यं सम्भवेत् । तस्मात् क्रियासद्भावोपि निश्चितः । अतो जड़चेतनात्मके सर्वत्रैव निरन्तरं नित्यरूपेण शश्वत् कर्म बोभूयते । तस्माद्धेतोर्मानवे उन्मेषण-निमेषण-गमन-भ्रमण-श्वास-प्रश्वासादयः शारीरिकक्रिया नानावैषयिकसदसच्चिन्तात्मिका मानसिकक्रियाश्च निसर्गतः सदा बोभवन्ति । एतावता स्त्री पुरुषो वा स्यात्, ज्ञानी अज्ञानी, मनुष्यो देवता वा भवेत् सर्वत्रैव कर्मसम्बोभूतिरवश्यं स्यात् । तदभावो नितान्तमसम्भवः । द्वितीयतः कर्मत्यागमन्तरेण नैव चिरशान्तिरासाद्यते न वा मुक्तिर्भवितुमर्हति । अपि च कर्माभावो यथाऽसम्भवस्तथैव कर्मत्यागोऽप्यसम्भवः । यदा कर्मत्यागो न भवितुं शक्नोति तदा कर्म त्यक्त्वा कथं मुक्तः सम्भवेत् । एतामेव गूढ़ामतिजटिलामत्यन्तचमत्कृतां शङ्कां श्रीमद्भगवद्गीता समादधात् । तथा हि, यस्य यादृगधिकारो यादृशी प्रकृतिः प्रवृत्तिश्च भवेत्, साधकस्तदनुकूलं कर्म कुर्वन्नूनमवतिष्ठेत । किन्तु तत् कर्म फलेच्छारहितः कर्तव्यबुद्ध्या कुर्यात् । तदेव तत्कर्मविधानमकर्मवद् भवेत् । एतदेव कर्मविधिना निष्कामकर्मानुष्ठानमुच्यते । एनमत्यन्तगहनविषयमित्थमपि बोद्धव्यम्—कर्मैव व्यष्टेः समष्टेः सृष्टेर्मूलम् । कर्मण्येव सर्वं निर्बिभर्ति । पिण्डब्रह्माण्डयोः सृष्टिस्थितिलयाः कर्मणैव सम्पद्यन्ते । द्वितीयतो बीजाद् वृक्षो वृक्षाच्च बीजं बोभूयमानमनाद्यन्तकर्मस्रोतांसि प्रवाहयति । कर्मप्रवाहोऽयं न विरम्येत न वा मुच्येत, किन्तु दार्शनिकदृष्ट्या एतत् सिध्यति यत्, संस्काररूपेणैकवारं कर्मणो बीजत्वप्राप्तेः द्वितीयतो वृक्षरूपेण भोगोत्पादनस्य चास्यावस्थाद्वयस्योत्पत्तेर्निदानं वासनाजालमेवास्ते । कर्म किल जड़राज्यात्मके पाषाणादौ चेतनराज्यमये मानवादौ च नियमितं बोभवीति । किन्तु पाषाणादौ वासनाजालसद्भावाभावात् तस्य कर्मणः संस्कारस्तत्र नैव संगृह्यते, मनुष्यान्तःकरणे तु वासनाजालं सदा सन्तिष्ठते, ततो मानवः सर्वेषां

शारीरिकमानसिकबौद्धिक-कर्मणां बीजभूतं संस्कारं स्वचित्ते वासनाजालेना-दत्ते । तदेव वासनाजालं संगृहीतेन संस्कारबीजेन देशकालयोः सम्यक् सहयोगित्वे वृक्षरूपं कर्म जनयतेतराम् । इत्थं वासनाजालविजड़ितमन्तः-करणं संस्कारात् कर्म कर्मतश्च पुनः संस्कारमुत्पादयत् सदा कर्मप्रवाहे पत-मानमवतिष्ठते । यदि वासनाजालमुच्छिद्येत तदा कर्म संस्कारसंग्रहाद्विर-मेत् यदा च कर्मसंस्कार एव जीवान्तःकरणे नैवाऽवतिष्ठेत तदा जीवः स्वत एव कर्मबन्धनाद्विमुच्येत । अतिगहनविषयमेतमवगन्तुं किञ्चिदन्यप्रकारेणापि प्रोच्यते—मीमांसाशास्त्रेण अनाद्यन्ताकाशस्त्रिधा व्यभाजि, एकश्चित्ताकाशो द्वितीयश्चिदाकाशस्तृतीयो महाकाशश्च । मानवानामन्तःकरणाकाशः चित्ता-काशः प्रोच्यते, ब्रह्माण्डस्य समष्ट्यन्तःकरणाकाशश्चिदाकाश आम्नायते, अन-न्तकोटिब्रह्माण्डानामनाद्यन्ताकाशो महाकाश आख्यायते । इदमाकाशत्रयं कर्मसंस्कारान् संग्रहीतुं धान्यसंग्रहस्थानं खलमिव प्रणिधेयम् । कर्म नैव नश्यति, कर्मबीजमत्राकाशत्रये कथञ्चिन्नूनमवतिष्ठते । तस्मादेव सृष्टेरना-द्यन्तप्रवाहो निरन्तरं प्रवहते । केवलेन निष्कामकर्मयोगेन वासनाजालमु च्छिद्य गमनागमनचक्रचङ्क्रमणावर्त्तात् पृथग्भवन् साधकः कर्मबन्धनात् त्रायेत । अत्र शङ्का भवितुमर्हति यत्, कर्म यदा न नश्यति कर्मबीजमपि यदा कुत्राप्याकाशेऽवश्यमवतिष्ठते तदा कथं मुक्तिः सम्भवेत् । एवंविधानां शङ्का-नामेतदेव समाधानं यत्, यदा वासनाजालमेव संस्काररूपं कर्मबीजं संगृह्णाति सन्धारयति च तर्हि जीवन्मुक्तो महापुरुषो यदा साङ्ख्यकर्मयोगाभ्यां शस्त्राभ्यां वासनाजालमुच्छिनत्ति तदा तस्य जीवकेन्द्रस्य चित्ताकाशस्तत्कृतकर्मबीज-संस्कारान् संग्रहीतुं नैव क्षमते । ततस्तज्जीवन्मुक्तान्तःकरणं कर्मबन्धनात् परिरक्ष्यते । द्वितीयतः प्रकृतेर्नियमस्यापि भङ्गो न जायते । एकतो यथा वासनाजाले छिन्ने जीवन्मुक्तान्तःकरणं योगयुक्तं सद्बन्धनविरहितमुपजायते, द्वितीयतस्तथैव कृतेऽपि कर्मणि निष्कामभावतः कर्म प्रकुर्वाणोऽसौ कर्मणैव निष्कामकर्मी जायते । तदीयं प्राक्तनमर्वाचीनं वा कर्म न तद्बन्धनाय क्षमते । यतस्तद्बन्धनाय यद्वासनामयं जालमासीत् तन्नैवाऽवशिष्टं । किन्तु प्रकृतेर्मा-तुरनिवार्यनियमो वर्त्तते यद्बीजाद् वृक्षो वृक्षाद् बीजं स्यात्; कर्मणः संस्कारः संस्काराच्च कर्म वा बोभूयते, इत्थं कर्मप्रवाहः सृष्टिप्रवाहश्च सदाऽवतिष्ठेत, एष प्राकृतिकनियमोऽपि नोच्छिद्यते, यतो जीवन्मुक्तमहापुरुषस्य कर्मराशिर्यदा तदन्तःकरणे बीजमाधातुं नेष्टे तदीयं चित्ताकाशश्च विजहाति तदा तत् सर्वं बीजजातं खलायमानमन्यं चिदाकाशमुपैति, तत्र स्थितश्च बीजजातं पुनर्देश-

कालानुकूल्यमासाद्य प्ररोहते । सृष्टेः कर्मणश्च नित्यप्रवाहो निरन्तरं प्रवहत्येव । केवलं यस्य जीवन्मुक्तस्यान्तःकरणमुच्छिन्नवासनाजालमुपजायते केवलमासावेव कर्मसंस्कारपशादात्मानमुन्मोच्य पलायते । एषा एव कर्मराज्याज्जीवानां विरतिर्वर्ण्यते, अयमेवाऽविद्याबन्धनाज्जीवानां मुक्तिराम्नायते, इयमेव गमनागमनचक्रवागुरोपरतिर्जीवानाम्, एतदेव मुक्तिरहस्यम्, इदमेव निष्कामकर्माचरणफलमिति ॥ ६–१६ ॥

नरिष्यन्तनृपतेर्मृत्युघटनायां शंकासमाधानाय जीवन्मुक्तिरहस्यप्रतिपादनम् ।

कर्मयोगी ब्राह्मणो नृपः, सन्न्यासी गृहस्थो वा भवेत्, तस्य नैसर्गिको मृत्युरकालमृत्युर्वा स्यात्, स जीवितावस्थायां मुक्तः शरीरान्ते च मुक्तेरधिकारी वर्त्तते, अत्र सन्देहो नास्ति । अतिविचित्रा कर्मगतिः । पूर्वकर्मानुसारत आयुरन्तो मृत्युसंयोगश्च संघटेते । ततोऽतिपुण्यशालिनः कर्मयोगिनो राज्ञो नरिष्यन्तस्य मृत्युघटनायां न काञ्चित् शङ्कां कर्त्तुमत्रसरो विद्यते ॥ २८–३२ ॥

त्रिंत्रिंशदुत्तरशततमाध्याये मातृगर्भे बहुवर्षवासविज्ञानविवेचनम् ।

प्रथमं तु सामान्यक्रमतोऽधिकदिनानि यावद् गर्भे सन्ततेर्निवासस्य असाधारणरीत्या गर्भाद्बहिर्निःसरणादेश्च नैकान्युदाहरणानि लौकिकेतिहासेष्वपि मिलन्ति । द्वितीयतः पृथक् पृथक् मन्वन्तरे सृष्टिश्रृङ्खलायां भेदसद्भावात् पुरुषशक्तौ स्त्रीशक्तौ च भेद उपजायते । एतन्निखिलकारणकलपाद् गर्भस्थस्य शिशोरधिकदिनानि यावत् गर्भवासे न कश्चित् संशयावसरः ॥ १–८ ॥

चतुस्त्रिंशदुत्तरशततमाध्याये नरिष्यन्तनृपतेर्जीवनवृत्तान्तमभिलक्ष्य वर्णाश्रमधर्मदिग्दर्शनम् ।

कर्मयोगित्वाज्जीवन्मुक्तत्वाच्च पत्युः शरीरान्तदशाया अमङ्गलमयीं घटनां विवेचयितुमेव कश्चिदवसरो नास्ति । किन्त्वार्यराजमहिष्यो यदा राजवैभवं विहाय वानप्रस्थाश्रमे तपश्चर्यापुरस्सरं निरताः सन्तिष्ठन्ते तत्कालीना गाथेयं सातिशयं हृदयं गृह्णाति, सनातनधर्मसिद्धान्तानुयोगाद् ब्राह्मणानां कृते ब्रह्मचर्यगार्हस्थ्यवानप्रस्थसन्न्यासनामानश्चत्वार आश्रमा विहिताः, क्षत्रियाणां निमित्तमाश्रमत्रयं तेषां सन्न्यासाधिकाराभावात्, वैश्यानामाश्रमद्वयं शूद्राणान्तु केवलं गृहस्थाश्रम एव विधीयते स्म । एतामेवाध्यात्मलक्ष्योपेतामाश्रमश्रृङ्खलामनुसृत्य प्राचीनक्षत्रियराजन्यवर्गे आत्मक्षोऽमितैश्वर्यशक्तिसम्पन्नश्चापि अन्ते निजराजवैभवमुत्सृज्य वानप्रस्थाश्रमस्थितस्तपश्चर्यामकार्षीत् । अस्योदाहरणं

महाराजनरिष्यन्तजीवने सर्वथा दृश्यते, अपि च तपस्विभिरन्तकालपर्यन्तं कथङ्कारं संयतेन्द्रियै रागद्वेषशून्यैश्च भवितव्यम्, अस्य सर्वस्यालौकिको दृष्टान्तश्च महाराजनरिष्यन्तजीवनचरिते जाज्वल्यमान उपलभ्यते । द्वितीयतो राजमहिष्यः किंविधाः पतिसहधर्मिण्योऽभवन् तपश्चर्यां प्रकुर्वाणाश्च ता अन्तावधि शरीरवाङ्मनसैः कथङ्कारं तपोऽरक्षन्, एतन्महाराज्ञीजीवने समुज्ज्वलमुदाह्रियते । आर्यराजा आर्यराजमहिष्यश्च समुन्नतमधिकारमाप्नुवाना अपि किंविधं त्रिलोकपावनं धार्मिकजीवनं निवहन्तो निर्वहन्त्यश्च स्वीयमाश्रमत्रयं कीदृगपालयन्, इत्यनया मधुरगाथया स्पष्टं प्रकाशते । एतादृक् क्षत्रियराजाचरणं सर्वेषां क्षत्रियनरेन्द्राणामनुकरणीयमास्ते ॥ ३४-३७ ॥

## षड्त्रिंशदुत्तरशततमाध्याये सतीधर्मरहस्योद्घाटनम् ।

सतीचरित्रं त्रिलोकपावनमास्ते, सतीधर्मश्च लोकत्रयाभ्युदयस्य हेतुरस्ति, नात्र कश्चित् संशयः । तपस्याबलेन देहाध्यासराहित्यं सात्त्विकधृत्या स्थूलदेहसम्बन्धत्यागं धर्मावलम्बनेन यावदिन्द्रियसुखविस्मरणम् पतितन्मयत्वेन समाधियोगं विना काऽपि स्त्री सतीव्रतपालनतः पत्या सह चितायां दग्धदेहा प्राणान् परित्यक्तुं नार्हति । सती यां योगशक्तिमाविर्भावयति तां महायोगिनोऽपि प्रकाशयितुं नैव प्रभवेयुः । सतीतपस्यायाः सादृश्यं न भवितुमर्हति । यद्यपि सतीनां सतीत्वपालननिमित्तं मार्गद्वयं वर्त्तते, एकमाजीवनब्रह्मचर्यव्रतपालनम्, द्वितीयं चितायां पत्या सह गमनम् । किन्तु द्वितीयः पतिसहगमनतपस्यामार्गोऽस्मिन् मृत्युलोकेऽनुपम आस्ते, सतीधर्मस्य च सर्वोत्तमः समुज्ज्वलो दृष्टान्तो विद्यते । सतीधर्मो वर्णाश्रमधर्मस्याधारो वर्त्तते । वर्णाश्रमधर्मो देवलोकाभ्युदयकरः, दैव्याः शृङ्खलायाः चतुर्दशभुवनानाञ्च रक्षक आस्ते । तस्माद् सतीधर्मः त्रिलोकीरक्षको ब्रह्माण्डपवित्रकारी च विद्यते, नात्र संशयलेशः । अत्र मृत्युलोकभूमण्डले केवले भारतवर्ष एव सतीधर्मस्यादर्शभूतं पुण्यमयं महिलामण्डलमाविर्बोभवीति ॥ २१-२१ ॥

## सप्तत्रिंशदुत्तरशततमाध्याये फलश्रुतिविवेचनम् ।

अस्य महापुराणस्य फलश्रुतिमधीत्य सामान्यपाठकानां शङ्का न भवेत् तस्मात् संक्षेपतः समाधीयते । तथा हि पुराणशास्त्रं पूर्णज्ञानमयस्य वेदस्य भाष्यमयमस्ति । आत्मज्ञानलब्धये कर्मयोग्यताप्राप्तये उपासनाया लक्ष्यसिद्धये च पुराणशास्त्रं सर्वतोऽधिकमवलम्बनीयमास्ते, द्वितीयतः पुराणशास्त्रं सर्वजीवहितकरं वर्त्तते । तृतीयतः श्रद्दधतां पुराणपाठकानां तच्छ्रोतॄणां वा

आत्मसाक्षात्काराय सात्त्विकबुद्ध्या दैवजगत्सम्बन्धस्थापनाय चैतत्पुराण-शास्त्रतो यादृक् सौकर्यमुपलभ्यते न तथाऽन्यशास्त्रसमूहात्। तस्मात् पुराण-शास्त्रस्य फलश्रुतौ यत् किञ्चिद् व्याह्रियेत तत् सर्वं नातिशेते। आत्मसाक्षात्कारं यदि क्षणमात्रमपि कश्चित् कर्त्तुं शक्नुयात् तर्हि तस्य कोटिकोटिजन्मकृतपापा-पनोदनस्य तु कथैव का, एष आत्मज्ञानी सर्वपापविनिर्मुक्तस्त्वरितं ब्रह्मसारूप्य-माप्नुयात्। एवंविधमात्मज्ञानप्राप्तिबीजं पुराणशास्त्रस्य स्थले स्थले निहितं विद्यते। किं बहुना, विभिन्नधर्माणां तत्क्रियासिद्धांशानाञ्च पुराणं खनिरेवास्ते। दैवजगत्सम्बन्धसाहचर्यसत्त्वे सत्येव साधको दैवशक्तिसम्पन्नो भवति। तत्स्व-रूपवर्णनं पुराणेषु कीदृग् वर्त्तते तस्य जाज्वल्यमानो दृष्टान्तः श्रीमत्सप्तशती-गीताऽऽस्ते ॥ १-३९ ॥

इति श्रीमार्कण्डेयपुराण-रहस्योद्घाटिनी टीका समाप्ता ।



## श्रीमहामण्डलके मेम्बर होनेसे—क्या क्या लाभ हैं ?

(१) इस अखिल भारतवर्षीय महासभाका अङ्ग बनके एक अतिमनोहर मानपत्र लाभ कर सकेंगे।

(२) केवल २) दो रुपये वार्षिक चन्दा देने पर तीन रुपये मूल्यकी एक सामयिक पत्रिका विना मूल्य मिलेगी।

(३) अपने आत्मीय तथा परिवारोंमें कन्याओं या पुत्रोंके लिये—'शादी-फण्ड' और अन्योंके लिये 'गमीफण्ड' से समाजहितकारीकोषके द्वारा विवाह या गमीपर यथेष्ट रुपये सहायतामें पा सकेंगे।

नियमादिके लिये निम्नलिखित पतेपर पत्र लिखें।

**सेक्रेटरी,—समाजहितकारीकोष,**

श्रीमहामण्डल भवन, जगत्गंज, बनारस।

## जातीयमहायज्ञसाधन।

इस ग्रन्थमें सात अध्याय हैं। यथा—आर्य्यजातिकी दशाका परिवर्त्तन, चिन्ताका कारण, व्याधिनिर्णय, औषधिप्रयोग, सुपथ्यसेवन, बीजरक्षा और महायज्ञसाधन। यह ग्रन्थरत्न हिन्दूजातिकी उन्नतिके विषयका साधारण ग्रन्थ है। प्रत्येक सनातनधर्मावलम्बीको इस ग्रन्थको पढ़ना चाहिये। द्वितीयावृत्ति छप चुकी है, इसमें बहुतसा विषय बढ़ाया गया है। इस ग्रन्थका आदर सारे भारतवर्षमें समानरूपसे हुआ है। धर्म्मके गूढ़तत्त्व भी इसमें बहुत अच्छी तरहसे बताये गये हैं। इसका बंगला अनुवाद भी छप चुका है। मूल्य १।)

## व्रतोत्सव-चन्द्रिका।

अर्थात्

हिन्दु-त्यौहारोंका शास्त्रीय विवेचन।

[ लेखक—महामहोपदेशक पं० श्रवणलाल शर्मा। ]

रायल आठपेजी आकारके लगभग पौने चारसौ पृष्ठोंकी सजिल्द पुस्तकका मूल्य ३) मात्र है। शीघ्र खरीदिये, अन्यथा विलम्ब करनेपर द्वितीय आवृत्तिकी प्रतीक्षा करनी पड़ेगी।

---

## एक वर्ष तक आर्यमहिला मुफ्त कैसे पढ़ सकते हैं ?

(१) आर्यमहिला महापरिषद्का सदस्य बनकर।
(२) आर्यमहिलाके चार ग्राहक बनाकर।
(३) वाणीपुस्तकमालाकी २०) रु० मूल्यकी पुस्तकें खरीदकर या खरिदवाकर।
(४) आर्यमहिलामें १ वर्षमें १२ कालमोंका विज्ञापन छपवाकर।
(५) आर्यमहिलामें ४ श्री पाठ्य निबन्ध देकर।

---

# ग्रन्थमालाएँ ।

## श्रीभारतधर्ममहामण्डल और उससे सम्बन्धयुक्त संस्थाओं द्वारा निम्नलिखित ग्रन्थमालायें प्रकाशित होती हैं:—

( १ ) निगमागमग्रन्थमाला । ( २ ) धर्मकल्पद्रुम-ग्रन्थमाला । (३) वाणी-पुस्तक-माला । ( ४ ) आर्यमहिला पुराणमाला । ( ५ ) सूर्योदय-संस्कृत-ग्रन्थ-माला । ( ६ ) बंगला-ग्रन्थमाला । ( ७ ) अंग्रेजी ग्रन्थमाला । ( ८ ) महामण्डल-पुस्तिका-माला ।

## स्थिर ग्राहकोंके नियम ।

( १ ) इन मालाओंकी जो कमसे कम ४) मूल्यकी पुस्तकें पूरे मूल्यमें खरीदेंगे अथवा स्थिर ग्राहक होनेका चन्दा १) भेज देंगे, उन्हें प्रकाशित और आगे प्रकाशित होनेवाली सब पुस्तकें ३/४ मूल्यमें दी जायंगी ।

( २ ) स्थिर ग्राहकोंको मालाओंमें प्रकाशित होनेवाली हर एक पुस्तक खरीदनी होगी ।

( ३ ) हर एक ग्राहक अपना नम्बर लिखकर या दिखाकर हमारे कार्यालयसे अथवा जहां वह रहता हो वहां हमारी शाखा हो तो वहांसे, स्वल्प मूल्य में पुस्तकें खरीद सकेगा ।

## धर्मकल्पद्रुम ।

यह हिन्दूधर्मका अद्वितीय और परमावश्यक ग्रन्थ है । हिन्दुजातिकी पुनरुन्नतिके लिये जिन जिन आवश्यकीय विषयोंकी जरूरत है, उनमेंसे सबसे बड़ी भारी जरूरत एक ऐसे धर्मग्रन्थकी थी कि, जिसके अध्ययन अध्यापनके द्वारा सनातनधर्मका रहस्य और उसका विस्तृत स्वरूप तथा उसके अङ्ग उपाङ्गोंका यथार्थ ज्ञान प्राप्त हो सके और साथही साथ वेद और सब शास्त्रोंका आशय तथा वेदों और सब शास्त्रोंमें कहे हुए विज्ञानोंका यथाक्रम स्वरूप जिज्ञासुको भलीभांति विदित हो सके। इसी गुरुतर अभावको दूर करनेके लिये भारतके प्रसिद्ध धर्मवक्ता और श्रीभारतधर्ममहामण्डलस्थ उपदेशक महाविद्यालयके दर्शनशास्त्रके अध्यापक श्रीमान् स्वामी दयानन्दजी महाराजने इस ग्रन्थका प्रणयन किया है । इसमें वर्तमान समयके आलोच्य सभी विषय विस्तृतरूपसे दिये गये हैं । इसके आठ खण्ड प्रकाशित हो चुके हैं । प्रथम खण्डका मूल्य २), द्वितीयका १॥), तृतीयका २), चतुर्थका २), पंचमका २), षष्ठका १॥), सप्तमका २), और अष्टमका २॥) है । इसके प्रथम दो खण्ड बढ़िया कागजपर भी छापे गये हैं । और दोनों ही एक बहुत सुन्दर जिल्दमें बांधे गये हैं । मूल्य ५) है ।

## राष्ट्रभाषा हिन्दीमें नयी चीज ।

सिर्फ यही एक पुस्तक—
पासमें रखनेसे सर्वसाधारणके सालभरके सब काम निकलेंगे । बड़े बड़े राजा-महाराजा, सरदार, सेठ-साहूकार, रानी-महारानी तथा प्रतिष्ठित विद्वानों द्वारा प्रशंसित—

# महामण्डल-डाइरेक्टरी ।

नये सालके पञ्चांग सहित प्रतिवर्ष छपती है ।

पृष्ठसंख्या ६०० से ऊपर होनेपर भी मूल्य केवल ॥।) बारह ही आने हैं ।

निगमागम बुकडिपो, भारतधर्मसिण्डिकेट लिमि०, स्टेशनरोड, बनारस कैण्ट ।

## वाणीपुस्तकमालाकी पुस्तकें ।

### मार्कण्डेय पुराण ।

महर्षि वेदव्यासका यह संसार प्रसिद्ध ग्रन्थ है । इसका प्रथम खण्ड, द्वितीय खण्ड और तृतीय खण्ड हिन्दीमें छपकर तैयार है । भाषा बड़ी सरल और टीका अद्वितीय है । मूल्य केवल १) रुपया प्रतिखण्ड, डाक व्यय अलग ।

### वेदान्तदर्शन ।

महर्षि वेदव्यासका यह संसार-प्रसिद्ध ग्रन्थ है । इसका अध्ययन जिसने नहीं किया वह शोचनीय हिन्दु है । इसकी सुप्रसिद्ध और सारभूत चतुःसूत्री का ऐसा सरल और सुगम भाष्य, वह भी शंकर भाष्यके अनुकूल, हिन्दीमें कहीं नहीं प्रकाशित हुआ है । हमारे प्रत्येक ग्राहकसे अनुरोध है कि, वे एक पुस्तक अवश्य खरीदें । दाम ।=)

### उपनिषद् ।

कठोपनिषद् । भाषा टीका सहित यह पुस्तक श्रीमती विद्यादेवीजी द्वारा लिखी हुई है । हमारे प्रत्येक ग्राहकोंसे तथा सर्वसाधारणसे निवेदन है कि इस पुस्तककी एक प्रति अवश्य मंगावें । मूल्य २)

### ईशोपनिषत् ।

प्रत्येक पढ़ा लिखा हिन्दु उपनिषदें पढ़ना चाहता है पर उनकी दुरूहता के कारण उन्हें कोई समझ नहीं पाता । इसी कमीको मिटानेके लिये यह पुस्तक निकाली गई है । इसमें मन्त्र, अन्वय, मन्त्रार्थ, शांकरभाष्य, शांकरभाष्य का हिन्दी अनुवाद और सबपर उपनिषत्-सुबोधिनी टीका है । मूल्य ॥)

### केनोपनिषत् ।

ईशोपनिषत्की भांति यह भी सर्वगुणसम्पन्न है । हम दावेसे कह सकते हैं कि ऐसे सरल, सुगम और अनायास-फलप्रद इन तीनों उपनिषदोंके जैसे भाष्य कहींसे भी नहीं निकले हैं । उच्च कक्षाओंके विद्यार्थी इन्हें बिना गुरुके भी पढ़कर सरलतासे पास हो सकते हैं । इनके पढ़नेसे उपनिषद्-विज्ञान हस्तामलकवत् हो जाता है । आर्यमहिलाके ग्राहक इनकी एक एक कापी अवश्य खरीदें । मूल्य ॥)

### कन्याशिक्षासोपान ।

कोमलमति कन्याओंको धर्मशिक्षा देनेके लिये यह पुस्तक बहुत ही उपयोगी है । मूल्य ≡)

### महिलाप्रश्नोत्तरी ।

इस पुस्तकमें महारानी और वाणी देवीके प्रश्नोत्तर रूपसे महिलाओंके जानने योग्य सनातनधर्मके अनेक गूढ़ विषय वर्णित हैं । मूल्य ≡) एक आना ।

---

# अंग्रेज़ी ग्रन्थमाला।

## इण्डियाज़ इटर्नल रिलिजन।

सनातनधर्मका रहस्य-प्रकाशक इससे बढ़कर अंग्रेज़ी भाषामें कोई दूसरा ग्रन्थ नहीं है। हालमें अमेरिकामें जो सर्वधर्मपरिषद् हुई थी, उसमें सनातनधर्मकी ओरसे पढ़नेके लिये पूज्यपाद श्रीस्वामीजी महाराजने यह ग्रन्थ-रत्न लिखकर प्रकाशित किया है। मूल्य ॥) डाक व्यय पृथक्।

इस ग्रन्थके अतिरिक्त महामण्डलकी अंग्रेज़ी ग्रन्थमालाके "वर्ल्डस् इटर्नल रिलिजन" और "श्रीमद्भगवद्गीता" ये दो ग्रन्थ भी विक्रीके लिये प्रस्तुत हैं।

## प्रवीण दृष्टिमें नवीन भारत।

इस ग्रन्थमें आर्यजातिका आदिका वासस्थान, उन्नतिका आदर्श निरूपण, शिक्षादर्श, आर्यजीवन, वर्णधर्म आदि विषय वैज्ञानिक युक्ति तथा शास्त्रीय-प्रमाणोंके साथ वर्णित हैं। यह ग्रन्थ धर्मशिक्षाके अर्थ बी० ए० क्लासका पाठ्य है। इसके दो खण्ड हैं। प्रत्येकका मूल्य २)

## नवीन दृष्टिमें प्रवीण भारत।

भारतका प्राचीन गौरव और आर्यजातिका महत्त्व जाननेके लिये यह एक ही पुस्तक है। इसका द्वितीय संस्करण परिवर्द्धित और सुन्दर होकर छप चुका है। यह ग्रन्थ भी बी० ए० क्लासका पाठ्य है। मूल्य १)

## श्रीरामगीता।

श्रीमहर्षि वशिष्ठकृत तत्त्वसारायणमें कथित यह श्रीरामगीता है। श्रीरामचन्द्रजीके मर्यादापुरुषोत्तम अवतारकी लीलाओंका विशद रहस्य प्रकाशित किया गया है। श्रीरामचन्द्र सीता और हनुमान आदिके कई त्रैवर्णिक चित्र भी दिये गये हैं। कागज छपाई तथा जिल्द आदि उत्कृष्ट हैं। एक धर्मफण्डकी सहायताके लिये यह ग्रन्थ विकता है। प्रस्तुत पुस्तकका मूल्य केवल २॥)

## कहावतरत्नाकर।

न्यायावली और सुभाषितावली सहित। हिन्दी भाषाका यह एक अद्वितीय ग्रन्थ है। इसमें हिन्दीभाषाकी प्रधानता रखकर पांच भाषाओंमें कहावतें दी गई हैं। हिन्दी और उसीकी संस्कृत कहावत, अंग्रेजी कहावत, फार्सी कहावत, उर्दू कहावत और अरबी कहावत। ये कहावतें प्रत्येक भाषाके प्रधान प्रधान विद्वानों द्वारा संग्रहीत और संशोधित हुई हैं। इसी प्रकार संस्कृत न्यायावली और उसका अंग्रेजी अनुवाद और विस्तृत अंग्रेजी विवरण तथा हिन्दी अनुवाद और हिन्दी विवरण दिया गया है। अन्तमें संस्कृत सुभाषितावली हिन्दी अनुवाद सहित दी गई है। हिन्दी कहावत, संस्कृत न्यायावली

और संस्कृत सुभाषितावली अकारादि क्रमसे दी गयी है। इसके प्रारम्भमें अंग्रेज़ी और हिन्दी भाषाका महत्त्व प्रतिपादन करनेवाली एक भूमिका दी गई है। पुस्तक सर्वाङ्गसुन्दर है, सुन्दर जिल्द बंधी हुई है। एक धर्म्मफण्डकी सहायताके लिये यह ग्रन्थ बिकता है। रायल एडीशन १०) साधारण संस्करण ७)

## संस्कृत ग्रन्थमालाके ग्रन्थ।

### सप्तगीताएँ।

पञ्चोपासनाके अनुसार पांच प्रकारके उपासकोंके लिये पांच गीताएं—श्रीविष्णुगीता, श्रीसूर्य्यगीता, श्रीशक्तिगीता, श्रीधीशगीता और श्रीशम्भुगीता एवं संन्यासियोंके लिये संन्यासगीता और साधकोंके लिये गुरुगीता भाषानुवाद सहित छप चुकी है। इन सातों गीताओंमें अनेक दार्शनिक तत्त्व, अनेक उपासनाकाण्डके रहस्य और प्रत्येक उपास्य देवकी उपासनासे सम्बन्ध रखनेवाले विषय सुचारुरूपसे प्रतिपादित किये गये हैं। ये सातों गीताएं उपनिषद्रूप हैं। विष्णुगीताका मूल्य १), सूर्य्यगीताका मूल्य ॥), शक्तिगीताका मूल्य १), धीशगीताका मूल्य ।॥), शंभुगीताका मूल्य १), संन्यासगीताका मूल्य १), और गुरुगीताका मूल्य ।) है। इनमें से पञ्चोपासनाकी पांच गीताओंमें एक एक तीनरंगा विष्णुदेव, सूर्य्यदेव, भगवती और गणपति देव तथा शिवका चित्र भी दिया गया है। शम्भुगीतामें वर्णाश्रमबन्ध नामक चित्र भी देखने योग्य है।

### पुराणरहस्यम्।

श्रीस्वामी जी महाराजका पुराण सम्बन्धी यह अपूर्व संस्कृत ग्रन्थ है। इसके पाठसे पुराणोक्त किसी विषयमें शंका नहीं रह जाती। मूल्य १॥) मात्र

### कर्ममीमांसादर्शन।

महर्षि भरद्वाजकृत यह दर्शनशास्त्र अनुसन्धान द्वारा प्राप्त हुआ है, जिसके प्रथम दो धर्मपाद, तथा संस्कारपाद प्रकाशित हुए हैं। सूत्र, सूत्रका हिन्दीमें अर्थ और संस्कृत भाष्यका हिन्दी अनुवाद इस प्रकार इसको छापा गया है। केवल हिन्दीभाषामें भी यह दर्शन छपा है, मूल्य १॥), संस्कृत भाष्यका मूल्य है २)।

### स्तोत्रकुसुमांजलि।

इसमें पंचदेवता, अवतार और ब्रह्मस्तुति तथा धर्मस्तुति, गंगादि पवित्र तीर्थोंकी स्तुति, वेदान्तप्रतिपादक स्तुतियां और काशीके प्रधान देवता श्रीविश्वनाथादिकी स्तुतियां हैं। मूल्य ।) आना।

### उपदेशपारिजात।

यह संस्कृत गद्यात्मक अपूर्व ग्रन्थ है। सनातनधर्म क्या है, धर्मोपदेश किसको कहते हैं, सनातनधर्मके सब शास्त्रोंमें क्या २ विषय हैं, धर्मवक्ता होनेके लिये किन २ योग्यताओंके होनेकी आवश्यकता है इत्यादि अनेक विषय इस

ग्रन्थमें हैं। संस्कृत विद्वान्मात्रको पढ़ना उचित है और धर्मवक्ता, धर्मोपदेशक, पौराणिक पण्डित आदिके लिये तो यह ग्रन्थ सब समय साथ रखने योग्य है मूल्य ॥) आना।

## हठयोगसंहिता।

भाषानुवाद सहित। योगविषयक ऐसा अपूर्व ग्रन्थ आजतक प्रकाशित नहीं हुआ है। इसमें हठयोगके ७ अंग और क्रमशः उनके लक्षण, साधनप्रणाली आदि सब अच्छी तरहसे वर्णन किये गये हैं। गुरु और शिष्य दोनों ही इससे पूरा लाभ उठा सकते हैं। मूल्य ।॥)

## तत्त्वबोध।

भाषानुवाद और वैज्ञानिक टिप्पणीसहित। यह मूल वेदान्त ग्रन्थ श्रीशंकराचार्य्यकृत है। इसका वंगानुवाद भी प्रकाशित हो चुका है। मूल्य =)

## मन्त्रयोगसंहिता।

भाषानुवाद सहित। मन्त्रयोगविषयक ऐसा अपूर्व ग्रन्थ आजतक प्रकाशित नहीं हुआ है। इसमें मन्त्रयोगके १६ अङ्ग और क्रमशः उनके लक्षण, साधनप्रणाली आदि सब अच्छी तरहसे वर्णन किये गये हैं। मूल्य १) रु०

## दैवीमीमांसादर्शन।

वेदके तीन काण्ड हैं। यथाः—कर्मकाण्ड, उपासनाकाण्ड और ज्ञानकाण्ड। ज्ञानकाण्डका वेदान्तदर्शन, कर्मकाण्डका जैमिनीदर्शन और भरद्वाजदर्शन और उपासनाकाण्डका यह अङ्गिरादर्शन है। इसका नाम दैवीमीमांसादर्शन है। यह ग्रन्थ आजतक प्रकाशित नहीं हुआ था। मूल्य १॥)

## श्रीमद्भगवद्गीता प्रथम खण्ड।

श्रीगीताजीका यह अपूर्व हिन्दीभाष्य प्रकाशित हो रहा है, जिसका प्रथम खण्ड, जिसमें प्रथम अध्याय और द्वितीय अध्यायका कुछ हिस्सा है, प्रकाशित हुआ है। गीताका अध्यात्म, अधिदैव, अधिभूतरूपी त्रिविध स्वरूप, प्रत्येक श्लोकका त्रिविध अर्थ और सब प्रकारके अधिकारियोंके समझने योग्य गीताविज्ञानका विस्तारित विवरण इस भाष्यमें मौजूद है। मूल्य १) रु०।

## योगदर्शन।

हिन्दी भाष्यसहित। इस प्रकारका हिन्दीभाष्य और कहीं प्रकाशित नहीं हुआ है। सब दर्शनोंमें योगदर्शन सर्ववादिसम्मत दर्शन है। मूल्य २) रु०

## संस्कृतविश्वविद्यालय।

अखिल भारतीय संस्कृत विश्वविद्यालयके समस्त पाठ्यग्रन्थ भारतधर्मसिण्डिकेट लिमिटेड, काशीमें मिलते हैं। जिन्हें आवश्यकता हो, मंगालें।

सब पुस्तकें मिलनेका पता—

मैनेजर—निगमागम-बुकडिपो,
भारतधर्मसिण्डिकेट लिमिटेड,
स्टेशन रोड, बनारस सिटी।

भारत-प्रसिद्ध अद्वितीय धर्मवक्ता

## श्रीस्वामी दयानन्दजी महाराज प्रणीत

## ❋ धर्म-विज्ञान ❋

हिन्दुधर्मके सम्पूर्ण ज्ञानलाभके लिये यह एक ही पुस्तक यथेष्ट है। इसमें धार्मिक तथा सामाजिक विषयों पर प्रचलित समस्त शंकाओंके सुन्दर उत्तर नवीन सायन्सके अनुसार दिये गये हैं। इसमें निम्नलिखित विषयों पर पूर्ण विचार किये गये हैं, यथा— आधुनिक विज्ञान और सनातनधर्म, देशसेवा और सनातनधर्म, स्वराज्य और सनातनधर्म, आचारमें वैज्ञानिक चमत्कार, षोड़श-संस्कार, सतीधर्मरहस्य, विवाहकालनिर्णय, वर्णविज्ञान और स्पृश्यास्पृश्यविचार, उपासनातत्त्व और मन्त्रशास्त्र, अवतारमीमांसा, श्रीकृष्णचरित्ररहस्य, परलोक और जन्मान्तर-तत्त्व, पौराणिक शंका समाधान, विज्ञान जगत्में नवीन-चमत्कार, व्याख्यान-कलाकुशलता इत्यादि। सम्पूर्ण ग्रन्थ रायल अठपेजी साइजके ६२५ पृष्ठका होने-पर भी मूल्य सजिल्द सिर्फ चार रुपया और बिना जिल्द ३॥) है।

* * * * * * *

श्रीमद्भगवद्गीता पर अपूर्व, अनुपम टीका।

## श्रीगीतार्थ-चन्द्रिका।

केवल हिन्दी भाषाके जाननेवाले भी इसके द्वारा गीताके गूढ़ रहस्यको जान सकें, इसी लक्ष्यसे श्रीस्वामीजीने यह टीका लिखी है। इसमें श्लोकके प्रत्येक शब्दका हिन्दी-अर्थ, समस्त श्लोकका सरल अर्थ और अन्तमें एक अति मधुर चन्द्रिका द्वारा श्लोकका गूढ़ तात्पर्य बतलाया गया है। भाषा अति सरल तथा मधुर है। मूल्य सजिल्द २॥) और बिना जिल्द २) है। पता—

मैनेजर—निगमागम बुकडिपो,

सिण्डिकेट भवन, स्टेशन रोड, बनारस कैण्ट।

अथवा—योगाश्रम, नवाबगञ्ज, कानपुर।

